दर्शनशास्त्रे

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]







३८ वर्षे

३-४ अङ्कौ

मार्गशीर्ष-फाल्गुनपूर्णिमे

दिसम्बर-मार्च १९८४ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


सम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

उपसम्पादकः

डॉ० हरिश्चन्द्रमणित्रिपाठी






३८ वर्ष

३-४ अङ्कौ

वार्षिकमूल्यम्, १० रूप्यकाणि

संयुक्ताङ्कयोः ६ रूप्यकाणि

# विषयानुक्रमणी

# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ३८ वर्षः | मार्गशीर्ष-फाल्गुन-पूर्णिमे, वि० सं० २०४० | ३-४ अङ्कौ |
|---|---|---|

## न्यायशास्त्रीयविचारपद्धत्या देहात्मवादस्य सम्भावना

आचार्यश्रीबदरीनाथशुक्लः

कुलपतिचरः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

( विषयोऽयं भारतीयदार्शनिकानुसन्धानपरिषदा सारनाथे समायोजितायां न्याय-पण्डित-गोष्ठ्याम् आचार्यश्रीबदरीनाथशुक्लमहोदयेन प्रस्तुतो विद्वद्भिः साभिनिवेशं सम्यक् चर्चितश्च )।

न्याय-वैशेषिकशास्त्रयोः प्रामाणिकग्रन्थानां पर्यालोचनेन आत्मनो विषय एष निष्कर्षः प्राप्यते यद् आत्मा क्षित्यप्तेजोमरुद्व्योमदिक्कालमनोभ्यो भिन्नं नवमं द्रव्यम्। स च द्विविधः—जीवात्मा, परमात्मा च। तत्र जीवात्मा प्रतिशरीरं भिन्नः, शरीरेन्द्रियमनःप्राणेभ्यो व्यतिरिक्तः सर्वमूर्तद्रव्यसंयोगी, कर्तृत्व-भोक्तृत्वाश्रयः, कृत्स्नैर्मूर्तद्रव्यैः संयुज्यमानोऽपि पूर्वार्जितादृष्टवशाद् येन देहेन सह विजातीयसंयोगलक्षणं भोगनियामकसम्बन्धं लभते, तेनैव देहेन पूर्व-कर्मणाम् उच्चावचानि सुखदुःखात्मकफलानि भुङ्क्ते। नवनवानि च कर्माणि कुर्वन् पुण्यपापापरपर्याययोः धर्माधर्मयोः स्वकीयं कोषं वर्द्धयते। अभिनवैरनु-भवैरुत्पाद्यमानं संस्कारराशिञ्च उपचिनुते। सर्वेष्वेषु कर्मसु तदीयादृष्टाकृष्टं मनस्तस्य साचिव्यं बिभर्ति। जीवात्मा हि तन्नये ज्ञानेच्छाद्वेषप्रयत्नधर्माधर्म-भावनासुखदुःखात्मकानां नवविशेषगुणानां संख्यापरिमाणपृथक्त्वसंयोग-विभागाभिधानां पञ्चसामान्यगुणानाञ्चाश्रयः; स्वकीयकर्मानुसारेण विविधासु

योनिषु जायते। मनुष्यशरीरेण च स्वात्मतत्त्वसाक्षात्कारमासाद्य अपवर्गापरनाम्नो निःश्रेयसस्याधिकारी प्राणि-जीवप्रभृतिशब्दैः व्यपदेश्यश्च।

परमात्मा पुनः जीवात्मभ्यो भिन्नः, अद्वितीयः, जगत्कर्ता, वेदप्रणेता, स्वोपासनया च जीवेभ्यो भौमदिव्यसुखप्रदाता, जीवानाञ्च तदर्जितकर्मफलभोगे मोक्षलाभे च तेषां सहायकः, नित्यज्ञानेच्छाप्रयत्नानां संख्यापरिमाणपृथक्त्वसंयोगविभागसहितानां नवगुणानामाधारः। ईश्वर-प्रभु-भगवत्प्रभृतिशब्दैर्व्यपदेश्यः। सृष्टिरक्षा-संहारकर्मानुरोधेन ब्रह्म-विष्णु-शंकरसंज्ञाभिर्बोध्यश्च।

बाल्येऽनुभूतस्य वार्द्धक्ये स्मरणानुपपत्त्या मृतदेहे अविद्यमानतया च ज्ञानं न देहाश्रितम्। ज्ञान-मूलकत्वादेवान्येऽपि विशेषगुणा न देहाश्रिताः। एकेनेन्द्रियेणानुभूतस्य स्मृतेः तदिन्द्रियनाशेऽपि जायमानतया एकदेहे अनेकज्ञानिनां सत्त्वे तेषां विपरीतासु दिक्षु युगपद् देहनयनप्रवृत्तिसम्भवेन देहोन्मथनापत्त्या च ज्ञानादिकं नेन्द्रियाश्रितम्। मनसोऽणुतया ज्ञानादीनां तदाश्रितत्वे तेषां प्रत्यक्षानुपपत्त्या ज्ञानादयो न मनोनिष्ठाः; किन्तु एभ्यो भिन्न आत्मैव ज्ञानादीनामाश्रयः।

अत्र चिन्त्यते—न्यायवैशेषिकग्रन्थेषु उपलभ्यमान एष आत्मवादो विमृश्यमानो नावकाशं लभते, मनसः सहयोगेन शरीरस्यैव आत्मत्वाभ्युपगमसम्भवात्। तथाहि आत्मा नातिरिक्तं द्रव्यम्, देहमनोभ्यामेव तत्साधनीयस्य निखिलप्रयोजनस्य निर्वर्तयितुं शक्यत्वात्। तदेवमेतन्नये देह एव बुद्धि-सुख-दुःखेच्छाद्वेषप्रयत्नानां प्रत्यक्षयोग्यगुणानामाश्रयः। अयोग्यानां धर्माधर्मभावनानामाश्रयो मनः। पृथिव्या विशेषगुणानां कारणगतैः सजातीयगुणैः पाकेन वा उत्पाद्यमानतया बुद्ध्यादयः पार्थिवस्य मनुष्यादिदेहस्य विशेषगुणा न भवितुमर्हन्ति। देहावयवानां जडतया बुद्ध्यादिराहित्येन तदीयगुणैः देहे बुद्ध्यादीनामुत्पत्त्यसम्भवात्। पाकेनाऽपि देहे तदुत्पत्तेः पाकजगुणानां सजातीयगुणध्वंसपूर्वकतया दुर्घटत्वादिति न शङ्क्यम्, बुद्ध्यादीनां शरीरस्य सामान्यगुणत्वाभ्युपगमात्। पृथिव्याः सामान्यगुणानामुत्पत्तौ च अवयवगतसजातीयगुणानां पाकस्य वा अनपेक्षितत्वेन शरीरे अन्यसामान्यगुणानामिव बुद्ध्यादीनामपि प्रकारान्तरेण उत्पत्तिसम्भवात्। बुद्ध्यादीनां शरीरस्य सामान्यगुणत्वाभ्युपगमे रूपादीनामिव यावच्छरीरं तदवस्थानमपि नापादयितुं शक्यम्। शरीरगतानां संयोगादिसामान्यगुणानामिव तद्गतानां बुद्ध्यादिसामान्यगुणानामपि शरीरसत्त्वे निवृत्तिसम्भवात्।

बुद्ध्यादीनां शरीरगुणत्वे तेषां कुतो न तदीयविशेषगुणत्वमिति न शङ्कनीयम्, विशेषगुणलक्षणेन तत्संग्रहासम्भवात्। तथाहि विशेषगुणत्वं नाम द्रव्यविभाजकोपाधिविशिष्टजातिमद्गुणत्वम्। वैशिष्ट्यञ्च स्वाश्रयवृत्तितावच्छेदकत्व-स्वानाश्रयवृत्तितानवच्छेदकत्वोभयसम्बन्धेन। गन्धत्वं, रूपत्वव्याप्यं नीलत्वादिकम्, अनुष्णाशीतस्पर्शत्वव्याप्यं पाकजन्यतावच्छेदकं वैजात्यम्,

अभास्वरशुक्लत्वव्याप्यं पाकजन्यतावच्छेदकं वैजात्यम्, मधुरत्वव्याप्यं पाकजन्यतावच्छेदकं वैजात्यञ्चोक्तोभयसम्बन्धेन द्रव्यविभाजकोपाधिना पृथिवीत्वेन विशिष्टं भवतीति तदाश्रया गन्धादयः पृथिव्याः विशेषगुणाः। शीतत्वस्य, स्नेहत्वस्य, सांसिद्धिकद्रवत्वत्वस्य पाकजन्यतानवच्छेदकमधुरत्वव्याप्यवैजात्यस्य च द्रव्यविभाजकोपाधिना जलत्वेन उक्तसम्बन्धाभ्यां विशिष्टतया तद्वन्तः शीतादयो जलस्य विशेषगुणाः, उष्णत्वं भास्वरशुक्लत्वं च द्रव्यविभाजकोपाधिना तेजस्त्वेन विशिष्टतया तद्वन्त उष्णादयस्तेजसो विशेषगुणाः। पाकजन्यतावच्छेदिकाया अनुष्णाशीतस्पर्शत्वव्याप्याया जातेर्द्रव्यविभाजकोपाधिना वायुत्वेन विशिष्टतया तद्वान् अपाकजानुष्णाशीतस्पर्शो वायोः विशेषगुणः। शब्दत्वस्य द्रव्यविभाजकोपाधिनाऽऽकाशत्वेनोक्तसम्बन्धाभ्यां विशिष्टतया तद्वान् शब्द आकाशस्य विशेषगुणः। बुद्ध्यादीनां देहगतत्वे तेषां पार्थिवजलीयतैजसवायवीयदेहेषु वृत्तितया बुद्धित्वादिजातयः पृथिवीत्वादिषु न केनापि द्रव्यविभाजकोपाधिनोक्तसम्बन्धद्वयेन विशिष्टाः, अत एव तद्वतां बुद्ध्यादीनां पृथिव्यादिविशेषगुणत्वाऽसम्भवेन बुद्ध्यादयः शरीरस्य न विशेषगुणाः; अपि तु सामान्यगुणा एवेति सुस्पष्टम्।

धर्माधर्मभावनानामेतन्मते मनोनिष्ठतया धर्मत्वादिजातीनां द्रव्यविभाजकोपाधिना मनस्त्वेन उक्तसम्बन्धाभ्यां विशिष्टतया तद्वन्तो धर्मादयो मनसो विशेषगुणाः।

बुद्ध्यादीनां शरीरगुणत्वे रूपादीनामिव तेषामपि चक्षुरादिभिः ग्रहणेन भाव्यमित्यपि न शङ्कार्हम्, शरीरगुणानां केनचिदेकेनैवेन्द्रियेण ग्रहणमिति नियमाभावेन चक्षुषा रूपस्य, त्वचा स्पर्शस्य, घ्राणेन गन्धस्य, रसनया रसस्येव मनसा बुद्ध्यादेर्ग्रहणाभ्युपगमे बाधकाभावात्। शरीरगुणानां बाह्येन्द्रियेणैव ग्रहणमिति नियमेन मनोग्राह्याणां बुद्ध्यादीनां शरीरगुणत्वं न सम्भवतीत्यपि न वक्तुमर्हम्, शरीरस्य ज्ञानादिमत्त्वे तद्ग्राहकस्य मनसोऽपि बाह्यद्रव्यगुणग्राहकतया बहिरिन्द्रियत्वस्वीकारसम्भवाद् अन्तरिन्द्रियत्वव्यपदेशस्य चान्तःस्थितत्वमात्रानुरोधित्वात्। किञ्च शरीरस्य बहिर्भागे विद्यमानानामेव गुणानां बहिरिन्द्रियग्राह्यत्वनियमः, बुद्ध्यादयस्तु शरीराभ्यन्तरभागे जायन्ते, अतस्तद्ग्रहणार्थम् अन्तरिन्द्रियस्यैवावश्यकतया न रूपादीनामिव शय्यादिसंयोगादीनामिव च बुद्ध्यादीनां बहिरिन्द्रियेण ग्रहणमापादयितुं शक्यम्।

अयमाशयः—सांख्यदर्शने इन्द्रियाणां ज्ञान-कर्मरूपप्रयोजनभेदेन द्विविधतया उभयविधेन्द्रियाणां सहकारितया यथा मनो ज्ञानेन्द्रियकर्मेन्द्रियोभयात्मकमुच्यते, तथैव बुद्ध्यादेर्देहादिगुणत्वे मनो बाह्यद्रव्यगुणग्राहकतया बहिरिन्द्रियं शरीराभ्यन्तरस्थिततयाऽन्तरिन्द्रियं च। शरीरस्य ज्ञानादिमत्त्वे तस्य रूपादयो यथा

अन्येन दृश्यन्ते, तथैव तस्य ज्ञानादयोऽपि अन्येन अनुभूयेरन्, इत्यपि न शङ्कनीयम् । एकशरीरगतस्य रूपादेरन्यशरीरस्थचक्षुरादिभिः सन्निकृष्टत्वेनान्येन तद्ग्रहण-सम्भवेऽपि एकशरीरगतस्य ज्ञानादेरन्यशरीरस्थेनाणुना मनसा असन्निकृष्टतया उक्तापत्त्यसम्भवात् प्रत्यक्षानुभवस्य इन्द्रियसन्निकृष्टमात्रविषयकत्वात्। शरीरस्य ज्ञानादिमात्वे बाल्ये अनुभूतस्य वार्धक्ये स्मरणानुपपत्तिः, बालवृद्धशरीरयोः भिन्नतया बालशरीरानुभवजन्यसंस्कारस्य वृद्धशरीरे अभावाद् इत्येषापि शङ्का नोचिता, शरीरात्मवादे शरीरगतेनानुभवेन संस्कारोत्पत्तेर्मनसि स्वीकारेण बाल-शरीरगतमनसो वृद्धशरीरेऽपि सत्त्वेन मनोनिष्ठसंस्कारमहिम्ना बाल्येऽनुभूतस्य वृद्धशरीरेऽपि स्मरणस्योत्पत्तिसम्भवात् ।

देहात्मवादे अनुभवस्य संस्कारं प्रति स्वाश्रयविजातीयसंयोगसम्बन्धेन संस्कारस्य च स्मृतिं प्रति स्वाश्रयविजातीयसंयोगसम्बन्धेन हेतुत्वाभ्युपगमात् । इन्द्रियैः सह शरीरावयवैर्वा सह मनसो यः संयोगः, स न विजातीयमनोदेह-संयोगगत-संयोगत्वव्याप्यवैजात्यभाजनम्, अतो न इन्द्रियेषु शरीरावयवेषु वा संस्कारस्य स्मृतेर्वा उत्पत्त्यापत्तिः। पूर्वभवशरीरसहयोगिनो मनसः, तच्छरीर-जन्याऽदृष्टवशाद् उत्पन्ने नितान्तं नूतनबालशरीरेऽपि विजातीयसंयोगेन प्रविष्टतया तत्रापि पूर्वशरीरानुभूतार्थस्य स्मरणोत्पत्तौ बाधकाभावेन सद्यो जातस्य शिशोः स्तन्यपाने प्रवृत्तिरपि निर्बाधा, पूर्वशरीरस्थमनसः पूर्वशरीरगतस्तन्यपानेष्ट-साधनताऽनुभवजन्यसंस्कारवतः शिशुशरीरेऽनुप्रविष्टतया तन्निष्ठोक्तसंस्कारमहिम्ना तत्र स्तन्यपानेष्टसाधनतास्मरणस्य निरुपद्रवत्वात् ।

देहात्मवादे पूर्वशरीरेणानुभूतार्थस्योत्तरशरीरेण स्मृतेरुपगमे चैत्रेणा-नुभूतस्य मैत्रे स्मरणापत्तिरित्यपि नापादयितुं शक्यम्, चैत्रानुभवजन्यसंस्कारस्य चैत्रमनस्येव सत्त्वात् तस्य च मैत्रशरीरेऽसत्त्वात् ।

वर्तमानदेहस्वरूप आत्मा आजीवनं विविधेषु कर्मसु व्यापृतो भवति। न च समेषां कर्मणां फलं लभते। मृते तस्मिन् तदभुक्तफलककर्मणां वैयर्थ्यरूपं कृतहानं नूतनदेहस्वरूप आत्मा च जन्मकालादेव सुखदःखात्मकानि फलानि भुङ्क्ते, इति अकृतकर्मणामपि फलोदयरूपोऽकृताभ्यागमश्च देहात्मवादे दुष्परि-हरे, इत्यपि न वक्तुमर्हम्, वर्तमानशरीरेण कृतानामभुक्तफलानां कर्मणां धर्माधर्म-व्यापारभाजनस्य तदधिष्ठातृमनसो नूतने तदर्जितादृष्टजनिते देहे प्रवेशेन तत्र तत्कर्मणां फलभोगसम्भवेन तेषां सार्थक्यात् । सर्वथा नूतने देहेऽपि पूर्वदेहकृत-कर्मणामेव फलोदयेनाकृताभ्यागमस्याभावाच्च। देहात्मवादे नायं नियमो यद् यो यत्कर्म करोति, स एव तत्फलं भुङ्क्ते, तस्यातिरिक्तात्मवादस्य चिरप्ररूढ-वासनामूलकतया प्रकृतवादेऽनभ्युपगमात्, तत्स्थाने यन्मनोऽविष्ठितेन देहेन यत्कर्म क्रियते, तत्फलं तन्मनोऽधिष्ठितेनैव देहेन भुज्यत इति नियमोपगमात्। मनसि

देहाधिष्ठातृत्वं देहानुयोगिकविजातीयसंयोगप्रतियोगित्वं देहस्य मनोऽधिष्ठितत्वं च मनःप्रतियोगिकविजातीयसंयोगानुयोगित्वम् । शरीरेण कृतयोर्विहितनिषिद्ध-कर्मणोर्मनस्यसत्त्वेन कुतस्तत्र ताभ्यां पुण्यपापोदयः ? कथं च मनोनिष्ठाभ्यां ताभ्यां तद्रहिते नूतने शरीरे सुखदुःखात्मकफलोदय इत्यपि नाशङ्कितुं शक्यम्, शरीरकर्मणः स्वाश्रयविजातीयसंयोगेनादृष्टं प्रति मनोनिष्ठादृष्टस्यापि तादृश-सम्बन्धेन सुखदुःखात्मकफलं प्रति कारणत्वोपगमेनोक्तशङ्काया अनवकाशत्वात् । अनुभवसंस्कारस्मृतिषु कर्मादृष्टफलेषु च साक्षात् सामानाधिकरण्येन कार्यकारण-भावस्य उक्तसम्बन्धेन तेषु कार्यकारणभावापेक्षया लाघवात् तदनुरोधेनातिरिक्ता-त्मवाद एव स्वीकर्तुमुचित इति वचनमपि न चारुतामञ्चति, क्लृप्तपदार्थाश्रयेणैव लघुगुरुकार्यकारणभावपक्षयोरुपस्थितौ लघुकार्यकारणभावस्यादरात् ।

यथा मीमांसकमते साध्यव्याप्यो हेतुः, हेतुमान् पक्ष इति द्वयोर्ज्ञानयोर्वादि-प्रतिवादिसम्मतयोरनुमितिं प्रति कारणता, नैयायिकनये च साध्यव्याप्तहेतुमान् पक्ष इति ज्ञानस्य वादिप्रतिवादिसम्मतस्यानुमितिं प्रति कारणतेति पक्षद्वयोप-स्थितौ लाघवेन नैयायिकसम्मत एव कार्यकारणभावो मन्यते, तन्मते कार्यकारण-तावच्छेदकगर्भे तत्तत्पुरुषाप्रवेशात् समवायसम्बन्धेनानुमितिं प्रति तज्ज्ञानस्य हेतुताभ्युपगमेनान्यदीयात्तादृशज्ञानादन्यस्यानुमित्यापत्तेरसम्भवात्, मीमांसकमते चैकस्य व्याप्तिग्रहेऽन्यस्य पक्षधर्मताग्रहे, एकत्र हेतौ व्याप्तिग्रहे, अन्यहेतौ पक्षधर्म्म-ताग्रहे चानुमित्यापत्तिवारणाय तत्तत्पुरुषीयतत्साध्यपक्षहेतुकानुमितौ तत्तत्पुरुषीय-तद्धेतुधर्मिकतत्साध्यव्याप्तिग्रहस्य तत्तत्पुरुषीयतत्पक्षधर्मिकतद्धेतुमत्ताग्रहस्य च हेतुताया अभ्युपगन्तव्यतया पुरुषभेदेन कार्यकारणभावानन्त्यप्रयुक्तगौरवाद् मीमां-सकसम्मतः कार्यकारणभावस्त्यज्यते ।

यथा वा अन्यधर्मितावच्छेदककयोग्यताज्ञानादपरधर्मितावच्छेदककशाब्द-बोधापत्तिवारणाय कार्यकारणभावावच्छेदकगर्भे धर्मितावच्छेदकनिवेशस्याश्यकतया शाब्दबोधयोग्यताज्ञानयोरात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावो धर्मितावच्छेदकभेद-मूलकानन्त्यप्रयुक्तगौरवग्रस्तः । धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या च तयोः कार्य-कारणभाव एकपुरुषीययोग्यताज्ञानादपरपुरुषस्य शाब्दबोधापत्तिपरिहाराय तत्तत्पुरुषीयत्वगर्भोऽपि तत्तत्पुरुषातिरिक्तधर्माणां कार्यकारणभावावच्छेदकगर्भेऽ-प्रवेशेन लाघवललित इति आत्मनिष्ठप्रत्यासत्त्या तयोः कार्यकारणभावमस्वीकृत्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्यैव तयोः कार्यकारणभावः स्वीक्रियते ।

प्रकृते तु नैषा स्थितिः, अतिरिक्तात्मनो वादिप्रतिवादिभ्यामनभ्युपगतत्वेना-नुभवसंस्कारस्मृतिषु कर्मादृष्टफलेषु च साक्षात् सामानाधिकरण्येन हेतुहेतुमद्भा-वपक्षः प्राप्त एव नास्ति, तत्प्राप्तये चानन्तानां विभुद्रव्यात्मकानां जीवानां कल्पना चातीव गौरवग्रस्ता । अतस्तेषु उक्तपरम्परासम्बन्धेन कार्यकारणभावात्मन एक-मात्रपक्षस्यैव प्राप्ततया तदभ्युपगम एव न्याय्यः ।

किञ्च अतिरिक्तात्मवादे 'अहं गच्छामि', 'अहं जानामि' इत्यादिप्रयोगेषु आख्यातार्थभेदकल्पनाप्रयुक्तमपि गौरवं दुर्वारम्। प्रथमस्थले कृतेः, द्वितीयस्थले चाश्रयत्वस्य आख्यातार्थतायाः स्वीकार्यत्वात्। देहात्मवादे चोभयत्र आश्रयत्व-मात्रस्यैव तदर्थत्वसम्भवात्। किञ्च चैत्रादिपदस्य शरीरगतचैत्रत्वादिजाति-प्रवृत्तिनिमित्तकतया चैत्रादिपदार्थस्य शरीररूपतया 'चैत्रो गच्छति' इति वाक्येन चैत्रे गमनाश्रयत्वबोधोपपत्तिसम्भवेऽपि 'चैत्रो जानाति' इति वाक्यश्चैत्रे ज्ञानाश्रयत्वबोधस्य अतिरिक्तात्मवादे दुर्घटत्वम्। 'ज्ञा'धातूत्तराख्यातस्य अवच्छे-दकत्वमर्थमङ्गीकृत्य तद्वाक्यतो यथार्थशाब्दबोधोदयो नोपपादयितुं शक्यः, तथा सति ईश्वरीयज्ञानस्य नित्यतया अनवच्छिन्नत्वेन 'ईश्वरः सर्वं जानातीति' वाक्यार्थबोधस्यानुपपत्तिप्रसङ्गात्। चैत्रादिपदानां स्वाश्रयत्व-स्वाश्रयावच्छेद्य-त्वान्यतरसम्बन्धेन चैत्रत्वादिजातिप्रवृत्तिनिमित्तकत्वाभ्युपगमेव शरीर-आत्मोभय-परतामभ्युपेत्य आख्यातस्य च आश्रयत्वार्थकतां स्वीकृत्यापि 'चैत्रो गच्छति' 'चैत्रो जानाति' इत्येतद्वाक्यार्थबोधो नोपपादयितुं शक्यते, 'चैत्रो न जानातीति' वाक्यार्थबोधस्य सत्त्वेऽपि 'चैत्रो जानातीति' बोधस्यापत्तिप्रसङ्गात्। प्रथमस्य शरीरमाश्रित्य द्वितीयस्य चात्मानमाश्रित्य द्वयोरपि युगपदुत्पत्तिसम्भवात्।

देहात्मवादमाश्रित्य कश्चिदेवमाशङ्कते यत् संस्कारस्य स्वाश्रयसंयोग-सम्बन्धेन स्मृतिं प्रति कारणत्वे तेन सम्बन्धेन तस्य शरीरनिष्ठताया इव इन्द्रिय-निष्ठताया अपि सत्त्वेन इन्द्रियेऽपि स्मृत्युत्पादापत्तिः, इन्द्रियेऽपि स्मृत्याश्रयत्व-स्वीकारे ज्ञानाश्रयत्वेन तस्याप्यात्मत्वापत्तिः। परमियं शङ्का नोचिता, इन्द्रिय-देहावयवादिव्यावृत्तेन स्वाश्रयविजातीयसंयोगेनैव संस्कारं प्रत्यनुभवस्य स्मृतिं प्रति च संस्कारस्य हेतुत्वोपगमेनोक्तापत्त्यसम्भवात्।

अत एव घटपटादिष्वपि मनस्संयोगसम्भवेन तत्रापि स्मृतेरुत्पत्तेः सम्भाव्य-तया तेषामपि आत्मत्वापत्तिरित्यपि नाशङ्कितुं शक्यम्, कारणतावच्छेदकसम्बन्ध-तयाऽभ्युपगतस्य मनोविजातीयसंयोगस्य तेष्वभावात्। समानकालीनत्वैकज्ञान-विषयत्वादीनामपि स्वाश्रयसंयोगसमकक्षतया तत्सम्बन्धैरपि स्मृतिं प्रति संस्कारस्य हेतुत्वापत्त्या सम्पूर्णस्य जगत एव ज्ञानाश्रयत्वेन आत्मत्वापत्तिशङ्का तु शङ्कितुः दुस्साहसमात्रसूचिका, अतिरिक्तात्मवादे मूर्तद्रव्यमात्रे आत्मनः संयोगसत्त्वेऽपि तत्समकक्षस्य समानकालीनत्वादिसम्बन्धस्यापि घटादिषु सत्त्वेऽपि यथा न घटाद्य-वच्छेदेन आत्मनि ज्ञानोत्पत्तिः; अपि तु तत्तदात्मविजातीयसंयोगाश्रयतत्तद्देहाव-च्छेदेनैव ज्ञानोत्पत्तिर्भवतीति शरीरस्यैव ज्ञानाद्यवच्छेदकत्वं न घट-पटादीनाम्, तथैव देहात्मवादे मनस्संयोगस्य तत्तुल्यस्य सम्बन्धान्तरस्य च घटपटादिषु सत्त्वेऽपि न तत्र स्मृत्याद्युत्पत्तिः। किन्तु संस्काराश्रयमनसो विजातीयसंयोगाश्रये शरीर एव स्मृत्याद्युत्पत्तिः, इति तत्त्वस्य अनायासवेद्यस्याज्ञानमूलकत्वादुक्तशङ्कायाः।

देहात्मवादमाक्षेप्तुकामः कश्चिदेवं ब्रूते यद् देहमनोभ्यां जीवात्मनो निराकरणप्रयासो देहमनसोरुभयोरात्मत्वाभ्युपगमे पर्यवस्यति। न चैवं स्वीकर्तुमर्हम्, देहस्यानित्यतया मनसश्च नित्यतया आत्मनि विरुद्धयोर्नित्यत्वानित्यत्वयोः समावेशप्रसङ्गात् कदाचिदहं नित्यः, कदाचिदहं नश्वर इत्यनुभवविरुद्धस्य प्रतीतिभेदस्य प्रसङ्गाच्च; परमिदं वचनं न चारु, गौतमेन '**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्**'[1] इति सूत्रेण आत्मलिङ्गतया उक्तानामिच्छादिज्ञानान्तगुणानां देहात्मवादे देह एव स्वीकारेण तत्रैव आत्मत्वस्य मनसि च तदाश्रयत्वमस्वीकृत्य धर्माधर्मभावनामात्राभ्युपगमेनैव तदुपकरणत्वस्य स्वीकृतया देहमनोभ्यां जीवात्मनो निराकरणप्रयासस्य देहमनसोरुभयोरात्मत्वाभ्युपगमपर्यवसायितावुद्धेरनवधानमूलकत्वात्।

मनसोऽणुपरिमाणतया तस्य शरीरव्यापित्वाभावेन आनखशिखान्तं समग्रं शरीरं व्याप्य उत्पत्तिमत्त्वेनानुभूयमानाया बुद्धेः समग्रशरीरव्यापिनोऽतिरिक्तात्मनोऽस्वीकारे देहात्मवादे उपपत्तिर्न भवितुमर्हतीति शङ्काऽपि नोचिता, अतिरिक्तात्मवादे आत्ममनःसंयोगस्य एकदा शरीरस्य कस्मिंश्चिन्मनःसम्मिते भाग एव सत्त्वेऽपि यथा समग्रं शरीरं व्याप्य उत्पत्तिमत्तयाऽनुभूयमाना बुद्धिरुपपद्यते, तथैव देहात्मवादेऽपि तदुपपत्तिसम्भवे बाधकाभावात्।

आपामर-साधारणानुभवानुसारं मनोऽन्तरिन्द्रियम्। 'मनसा करोमि', 'मनसा अवधारयामि' इत्यादिप्रतीतिबलेन च करणमात्रम्, अतः करणमात्रस्य तस्यात्मत्वाभ्युपगमः सर्वलोकसिद्धस्यात्मकर्तृत्वाभ्युपगमस्य विरुद्ध इति शङ्कापि नोचिता, देहात्मवादे देहमात्रस्यैवात्मत्वम्, मनसश्च तदुपकरणत्वमात्रम्, नात्मत्वमिति पूर्वमेव स्पष्टीकृतत्वात्।

मनोगतस्यादृष्टस्य शरीरे चैतन्याधायकत्वस्वीकारे मृतशरीरे नियमतश्चैतन्याभावानुपपत्तिः, शरीरमरणोत्तरमपि चैतन्याधायकादृष्टविशिष्टमनसो विद्यमानत्वादिति शङ्का तु न सुलभावकाशा, शरीरस्य मरणकाल एव नियमेन तेन सह मनसः सम्बन्धविनाशस्यातिरिक्तात्मवादे शरीरस्य मरणकाल एव तेन सह आत्मनो विजातीयसंयोगविनाशस्येव जायमानत्वात्।

यदि शरीरमात्मा, तर्हि 'राहोः शिरः' इतिवद् 'मम शरीरम्' इत्यादि प्रयोगाणां भाक्तत्वेन कथञ्चित् समर्थनेऽपि अहं शरीरमित्येतादृशप्रयोगः कदापि कुतो न प्रवर्तते, इत्येष प्रश्नः दुरुत्तर इति कथनमपि नौचित्यमञ्चति, शब्दप्रयोगस्य शब्दार्थज्ञानाधीनतया अहं शरीरमिति ज्ञानाभावेन तादृशप्रयोगस्य प्रवृत्त्यभावात्। शरीरस्यात्मत्वे तादृशं ज्ञानमेव कुतो न जायत इत्यपि न शङ्कितुं शक्यम्, अहमर्थस्य स्वगतयोग्यगुणाश्रयेणैव ग्राह्यत्वनियमेन 'अहं स्थूलः', 'अहं कृशः',

1. न्या० सू० १.१।१०।

'अहं सुखी', 'अहं दुःखी' इत्यादिरूपेणैव अहमाकारज्ञानस्य आनुभविकत्वेन अहं शरीरमित्याकारकज्ञानस्यातिरिक्तात्मवादे अहमात्मेति ज्ञानस्येवानुदयात्। अतिरिक्तात्मवादेऽपि अहमात्मेत्यनुभवस्य आपामारसाधारण्येन स्वीकरणं न सम्भवति, अन्यथा तस्य विवादविषयत्वानुपपत्तेः। अत एवोक्तं भाषापरिच्छेदे विश्वनाथेन—'**अध्यक्षो विशेषगुणयोगतः**' योग्यविशेषगुणस्य ज्ञानसुखादेः सम्बन्धेन आत्मनः प्रत्यक्षत्वं सम्भवति, नान्यथा।

क्षिप्तविक्षिप्तादिचित्तभूमिषु शरीरावयवेभ्यः समग्रात् शरीराच्च आत्मबुद्धेरपसारो देहात्मवादे समर्थयितुं न शक्यः, एषाऽपि चिन्ता निराधारा, देहात्मवादेऽपि तादृशीनां चित्तभूमीनां सम्भवेन तन्मूलकस्यात्मबुद्धेरपसारस्य सम्भवे बाधकाभावात्।

'अहं वा न वेति' न कश्चित् सन्देग्धि, शरीरमात्मा वा न वेति विचारवन्तो मनीषिणोऽपि संशेरते, यदि शरीरमेवात्मा, तदा तत्रात्मत्वसन्देहे कुतो न कस्यापि 'अहं वा न वेति सन्देहः' इति प्रश्नोऽपि नोचितः, यतोऽतिरिक्तात्मवादे शरीरमनात्मेति निश्चयो देहात्मवादे च शरीरमात्मेति निश्चयः, अतो वादद्वय एवोक्तसन्देह आहार्यः, अहमाकारनिश्चयश्चानाहार्यः अतिरिक्तात्मवादे देहात्मवादे चोभयत्र समानः, स च 'अहं वा न वेति' संशयस्य विरोधी, अतः शरीरे आहार्यात्मसन्देहेऽपि अहमाकारनिश्चयस्य निर्बाधतया तत्प्रतिबन्धवशान्नोदेतुमर्हति तादृशः संशयः।

अत्रायमाशयो यद् अहमिति शब्दस्योच्चारणकर्त्तैव अहमर्थो भवति, अतोऽतिरिक्तात्मवादे अहमिति शब्दप्रयोक्ता अतिरिक्त आत्माऽहमर्थः, देहात्मवादे अहमितिशब्दप्रयोक्ता देहः अहमर्थः, उभयोरेव स्वस्वमतानुसारेण अहमर्थस्य अस्तित्वं निश्चितम्, अतः 'अहमस्मि वा न वेति' स्वरूपे पर्यवसायिनः 'अहं वा न वेति' संशयस्य अहमस्मीति निश्चयप्रतिबध्यतया न तदुत्पत्तिसम्भवः, शरीरे आत्मत्वस्योक्ताहार्यसंशये सत्यपि अहमस्मीति निश्चयस्याक्षुण्णत्वात्।

शरीरमेव '**अहं शरीरं वा न वा**' इति विमृशतीति कथनं देहात्मवादेऽतिविचित्रमिति वचनमपि देहात्मवादाक्षेप्तुर्न चारुतां धत्ते, यतोऽतिरिक्तात्मवादे '**अहं न शरीरम्**' इति निश्चयः, देहात्मवादे च '**अहं शरीरम्**' इति निश्चयः, अत उभयोरेव वादयोरुक्तविमर्शस्याहार्यत्वेन देहात्मवादे शरीरस्य '**अहं शरीरं वा न वा**' इति विमर्शकर्तृत्वकथनं कुतो विचित्रमिति स एव वक्तुमर्हति।

अहमिति प्रतीतिः कदाचिद् मूर्धतो जायते, कदाचित् तदीयमज्जातन्तुभ्यो जायते, अतो देहात्मवादे '**अहं मे मूर्धा मज्जातन्तवो वा**' एतादृशानुभवस्योदयोऽनिवार्य इति कथनमपि न पाण्डित्यानुरूपम्, मूर्धादितो जायमानाया अपि प्रतीतेस्ततो भिन्ने देहाभिधे अवयविन्येवं विद्यमानतया तस्यैवाहमर्थत्वाद् अहमर्थताया ज्ञानाश्रयत्वनियतत्वात्।

'अहम्'प्रतीतिरन्यसकलशरीरसुखदुःखादिप्रतीतिभ्यो नितरां भिन्नेति सर्वानुभवः, अतः शरीरतो मनस्तोऽपि भिन्नं किमपि तस्या अधिष्ठानमावश्यकमिति कथनमपि न मनीषानुरूपम्, केवलाया 'अहम्'इत्याकारायाः प्रतीतेरतिरिक्तात्मवादिभिरप्यस्वीकारात् । अहमितिशाब्दजबोधस्तु अहमुच्चारयितृनिष्ठो देहात्मवादे अहमुच्चारयितरि देहेऽधिश्रित इति कुतस्तस्या अधिष्ठानान्तरापेक्षेति दुर्ग्रहम् ।

स्वप्नसदृशीषु कासुचित् चैतन्यावस्थासु बाह्यपदार्थानां स्वशरीरस्यापि च सत्यत्वं सन्दिग्धं तिरोहितं विपर्यस्तं प्रतिषिद्धं च भवदुपलभ्यते, परमात्मनः सत्यत्वं तथा भवन्नोपलभ्यते, यदि शरीरमेवात्मा, तदा तस्यापि सत्यत्वं कुतो न तादृशं भवदुपलभ्यते, एषा शङ्काऽपि निःसत्त्वा, सतां पदार्थानां सत्यतायास्तथाप्रतीतेर्भ्रमतया यादृशदोषजन्यत्वं तादृशदोषेणैव तत्काले शरीरे आत्मत्वबुद्धेः प्रतिबन्धेनात्मरूपतया शरीरस्य सत्यतायाः सन्दिग्धत्वाद्यसम्भवात् । सत्यं शरीरमेव आत्मा न तौ मियोऽन्यौ; किन्तु चेष्टाश्रयत्वलक्षणं शरीरत्वं ज्ञानाद्याश्रयत्वरूपमात्मत्वं परस्परं भिन्नम्, उक्तासु चैतन्यावस्थासु तादृशप्रतीत्याधायकदोषवशान्न तदानीं देहे आत्मत्वबुद्धिः, किन्तु शरीरत्वस्यैव बुद्धिः, अतः शरीरत्वेन गृह्यमाणस्यैव देहस्य सत्यत्वं सन्दिग्धत्वादिभाग्, न त्वात्मत्वेन गृह्यमाणस्येति विभावनीयम् ।

शरीरात्मवादं विरोद्धुमुत्सहमानाः केचन साहसिनो वक्ष्यमाणोपमान् प्रश्नानुत्थापयन्त आत्मनः पण्डितप्ररूपतां प्रदर्शयितुं यतन्ते, यथा—

(१)—समवायिकारणनाशे द्रव्यनाशस्यानिवार्यतया विषधरेण दष्टाङ्गुलेश्छेदे शरीरसमवायिनोऽङ्गुल्यात्मनोऽवयवस्य नाशेन शरीरात्मनो नाशस्यावश्यम्भावेन विनष्टाङ्गुलेः पुंसः 'अहं मृतः' इति कुतो न प्रतीतिः ?

(२)—योऽहं पूर्वजन्मनि पुण्यमर्जितवान्, सोऽहं वर्तमाने जन्मनि सुखमनुभवामि, योऽहं पूर्वजन्मनि पापं संचितवान्, सोऽहमस्मिन् जन्मनि दुःखमनुभवामि । अहमस्मिन् जन्मनि पुण्यकर्म करोमि, येनाग्रिमे जन्मनि सुखी स्याम्, इत्येवं पूर्वापरजन्मनोरेक एवाहमर्थो मनुष्यैरनुभूयते । यदि शरीरमेवाहमर्थ आत्मा स्यात्, तदा विभिन्नयोः जन्मनोरेकस्य देहात्मनोऽभावेन कुतो नानुपपत्तिरुक्तानुभवस्य ?

(३)—शरीरस्यात्मत्वे कुतो नैषा प्रतीतिः, 'अहं शरीरम्' इति, कुतो 'मदीयं शरीरम्' इत्येवमेव प्रतीतिः, शरीरस्याहमर्थत्वे षष्ठीव्यपदेशस्य कथमुपपत्तिः ?

(४)—धर्माधर्मनिर्णयः श्रुतिसिद्धः, तदनुसारं मनसि धर्मादीनां कल्पनं कथं युज्येत, एतत्सन्दर्भे गोतमोक्तिश्च कथमुपपद्येत ?

आग्नेयेष्टौ पठनीयेन मन्त्रेण निर्दिष्टः 'शरीरं ते पृथिवीं गच्छतु' इत्यर्थः

कथं सङ्गच्छेत ? शरीरस्यात्मत्वे 'ते' इत्यनेन तस्यैव वक्तव्यतया 'शरीरम्' इत्यनेन सह तदीयस्य भेदसम्बन्धस्य दुर्घटत्वात्, न्यायवार्तिकस्येदृशः सङ्केतः कथं युज्येत ?

(५)—देहप्राणमनोविज्ञानसुखेषु उत्तरोत्तरस्यातिप्रियत्वेन तत्प्राप्तये पूर्व-पूर्वस्य त्यागदर्शनात् कथमौपनिषदस्यात्मनोऽपलापः शक्यक्रियः ?

**एषु प्रश्नेषु प्रथमस्य विषये वक्ष्यमाणं वेदितव्यम्—**

सर्पेण दष्टाङ्गुलेश्छेदे सति साङ्गुलिशरीरात्मनो नाशे तदङ्गुलिहीनः खण्डशरीरात्मा जायते, तथा च यो देहात्मा नष्टः, अविद्यमाने तस्मिन् नोक्ता प्रतीतिरापादयितुं शक्या, प्रत्येतुरभावात्। यश्च खण्डदेहात्मा जातः, स न नष्ट इति तत्र मृतत्वस्य बाधेन न तत्राप्युक्ता प्रतीतिरापादयितुं युक्ता, अङ्गुलिहीनदेहात्मनो जाततया तस्य 'अहमुत्पन्नः' इति कुतो न प्रतीतिरित्यप्यापादनं न युक्तम्, उत्पत्ते-रतीन्द्रियत्वात्, उत्पन्नस्य च प्रत्यक्षताया असन्दिग्धत्वात्। किञ्च कथितकल्पा प्रतीतिः देहातिरिक्तात्मवादेऽपि दुष्परिहरा, कृशत्वादेर्देहधर्मस्यात्मन्यारोपेण छिन्नदष्टाङ्गुलेः पुंसः 'अहं मृतः' इत्यादिप्रत्ययस्य सम्भवात्।

**द्वितीयप्रश्ने तावदेवं विज्ञेयम्—**

उक्तोऽनुभव उत्तरजन्मस्थेऽहमर्थे पूर्वजन्मस्थस्याहमर्थस्य नाभेदमवगाहते; किन्तु तत्सजातीयाभेदमवगाहते, साजात्यं च तयोरभिन्नमनस्कत्वेन, उक्तिरियं नैव न्यक्कर्तुमर्हा, 'सैवेयं दीपकलिका', 'सैवेयं गुर्जरी' इत्याद्यनुभवानां तथात्वस्य सर्वसम्मतत्वात्।

**तृतीये प्रश्ने तावदित्थमवगन्तव्यम्—**

अहमर्थस्य सर्वैः सुखादिमत्तयैवानुभूयमानतया यथाऽतिरिक्तात्मवादे 'अहं सुखी', 'अहं दुःखी' इत्यादिरूपैव प्रतीतिः, कृशत्वादेर्देहधर्मस्यारोपेण 'अहं कृशः' इत्यादिरूपेणैव वा प्रतीतिः सर्वानुभवसिद्धा, न तु 'अहं देहतो भिन्नः, अहमात्मा' इत्यादिरूपा, तथैव देहात्मवादेऽपि 'अहं सुखी' इत्यादिरूपैव प्रतीतिः, न तु 'अहं शरीरम्' इत्यादिरूपा, 'मम शरीरम्' इति षष्ठीव्यपदेश्या अहमर्थशरीरयोः सम्बन्धप्रतीतिश्च 'राहोः शिरः', 'ममात्मा' इत्यादिप्रतीतितुल्यतया न शक्यानु-पपत्तिका।

**चतुर्थे प्रश्ने तावदेवं विज्ञेयम्—**

सत्यं धर्माधर्मनिर्णयः श्रुत्यधीनः, श्रुतिश्च धर्मादीनामात्मनिष्ठत्वप्रति-पादिका; किन्तु श्रुत्या धर्मादीनामाश्रयत्वेन प्रतिपाद्य आत्मा देह एव, तदन्यो वेति

यदि चिन्त्यते, तदा तस्य देहरूपता प्रदर्शितयुक्तितया सिध्यन्ती न शक्यपरिहारा। एतत्सन्दर्भे गोतमोक्तिर्नान्धेन सत्ता चिन्त्या; किन्तु तर्कदृशैव दृश्या, तथा च सति तदुक्तेरुपपत्तिर्देहात्मवादेऽपि न दुर्घटा, किञ्च देहात्मा यदि युक्तिबलात् सिध्यति, तदा कस्याप्यन्यथावचनेन स न बाधितुं शक्यः, यथोक्तं गदाधरेण व्युत्पत्तिवादे— **'न हि कस्यचिद् ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद् वस्तुसिद्धौ बाधकम्'।**

'शरीरं ते पृथिवीं गच्छतु' इत्यत्र च सप्राणदेहस्वरूप आत्मा सम्बोध्यः, तस्य निष्प्राणेन शरीरेण कथञ्चिद् भेदसम्बन्धः सूपपन्न एवेति, तत्रापि न काचिदनुपपत्तिः, अत्रार्थे न्यायवार्तिककृत्कृतसङ्केतोऽपि युक्ततां न त्यजति कथञ्चिदपि देहात्मवादे।

**पञ्चमे प्रश्ने तावदित्थमवसेयम्—**

अस्ति मनीषिणां मतिभेदः स्वरूपे औपनिषदस्यात्मनः। केचन तमणुम्, केचन विभुम्, केचनाद्वितीयम्, केचन सद्वितीयम्, केचन निर्धर्मकम्, केचन कर्तृत्वादिधर्मकम्, केचन ज्ञानानन्दात्मकम्, केचन ज्ञानानन्दाश्रयं मन्यन्ते। तथा च यथेमा अनेका मतयस्तद्विषये प्रवृत्ताः, तथैव ज्ञानसुखाद्याश्रयो धर्माधर्मसंस्काराश्रयेण मनसोपजुष्टो देह एवोपनिषत्प्रतिपाद्य आत्मेत्यप्येका मतिः प्रवर्तते चेत् किं क्षीयते लोकस्य ? अतो देहात्मवादे नापलापप्रसक्तिरौपनिषदस्यात्मन इति सुव्यक्तम्।

एतस्मिन् वादे च यत्र तत्र ग्रन्थेषु समुपलभ्यमानो देहिशब्दः, आत्मशब्दो जीवशब्दः, ईदृशोऽन्यो वा शब्दो मनःपरतया देहप्रवाहपरतया वा शक्यव्याख्यानतया न तादृशैर्वादस्यास्यापवादः स्वप्नेऽपि शङ्कार्हः।

देहात्मवादे शरीरस्य सुखसमृद्धिसम्पन्नतासम्पादनमेव परमः पुरुषार्थः, तदुपेक्षया लोकल्याणाय खेदस्वीकारे दृश्यमाना मानवप्रवृत्तिरस्मिन् वादे कथमुपपद्येत ? अयं प्रश्नोऽपि देहात्मवादे न दुरुत्तरः, यतो यथा अतिरिक्तात्मवादे लोकप्रवृत्तिः प्रायेण स्वस्य सुखिताया निर्दुःखतायाश्च सम्पादनायैव भवति, कतिपयविवेकिनामेव च स्वसुखनिरभिलाषतापूर्वकं लोकहिताय खेदस्वीकारे प्रवृत्तिः भवति, तथैव देहात्मवादेऽपि तदुपपत्तौ न कश्चित् प्रत्यूहः, अतिरिक्तात्मवादी यथा स्वभिन्नानां हिताय स्वसुखाभिलाषं शिथिलीकृत्य प्रवर्तते, खेदं च सहते, तथैव देहात्मवादी अपि यदि सुशिक्षितः सुसंस्कृतो विवेकी, तदा स्वसुखे निरभिलाषः सन् स्वभिन्नानां देहात्मनां हिताय प्रवर्तिष्यत एव खेदं सहिष्यत एव।

संसारेऽस्त्येव विपुलो देहात्मवादिवर्गः, यस्य सदस्येषु बहवो लोकहितायात्मनो महान्तं धनराशिमुत्सृज्य विद्यालयचिकित्सालयादीनां निर्मापणे आनन्दमनुभवन्ति। कश्चिद् विपश्चिदेवमाशङ्कते यद् देहात्मवादे अदृष्टभावनयोर्मनो-

निष्ठत्वस्वीकारे सुषुप्तौ मनसः पुरीतत्यां प्रवेशे तत्काले श्वासप्रश्वासयोर्गतिर्दुरुपादा स्यात्, अतोऽदृष्टाद्याश्रयस्यातिरिक्तात्मनः स्वीकार आवश्यकः, तत्सत्त्वे तत्प्रयत्नेन श्वासप्रश्वासयोर्गतिसम्भवात्। परमेषाऽपि शङ्का निर्जीवप्रायैव, त्वङ्मनःसंयोगस्य ज्ञानमात्रं प्रत्येव कारणत्वात्, सुषुप्तौ ज्ञानानुदयादेव तन्मूलकेच्छाद्वेषादीनामनुदयस्य सूपपन्नत्वात्, जीवनयोनियत्नस्य श्वासादिगतिसम्पादकस्य ज्ञानानपेक्षतया जीवनादृष्टमात्रमूलकतया पुरीतति स्थितस्यापि मनसो जीवनादृष्टजन्येन शरीरयत्नेन श्वासादीनां गत्युपपादनसम्भवात्।

देहात्मवादे आजीवनं मनुष्यस्य कर्मव्यापृतिर्नोपपद्यते। चरमे वयसि क्रियमाणानां तत्काल एव फलाजनकानां कर्मणां जीवने फलप्राप्तेरसम्भाव्यत्वात्, इत्यपि न शङ्कनीयम्, स्वतोऽधिकजीविनामुक्तकाले जनिष्यमाणानां च तादृशकर्मफलप्राप्त्यभिप्रायेण आप्राणान्तं कर्मव्यापृतेः सम्भवात्। मनुष्यः स्वसुखलाभायैव कार्यं कुरुते, इति न वक्तुं शक्यम्, लोकहितार्थमपि बहुषु कार्येषु मनुष्यस्य प्रवृत्तिदर्शनात्। यानि लोकहितावहानि कार्याणि कर्तुर्वर्तमाने जीवने तल्लाभाय न भवन्ति। तत्साध्यपुण्यस्य जन्मान्तरे फलाशयैव, तानि कार्याणि क्रियन्त इत्यपि न वक्तुं शक्यम्, वर्तमानजीवनान्तमेव स्वास्तित्वं मन्यमानैः जन्मान्तरे विश्वासरहितैरप्यनेकैराजीवनं क्रियमाणानां परैरेव प्राप्यलाभानां बहुवित्तव्ययायाससाध्यकार्याणां प्रत्यक्षसिद्धत्वात्।

शरीरं परार्थम्, सङ्घातरूपत्वात्, शय्यावत्, इत्यनुमानेन सिध्यन् परः शरीरभिन्न आत्मा न वाङ्मात्रेण युक्त्याभासजालेन वा निराकर्तुं शक्य इत्यपि वक्तुमनर्हम्, परार्थत्वस्य दुर्वचत्वात्, तथाहि परार्थत्वं यदि स्वभिन्नस्य भोगसाधनत्वम्, तदा दृष्टान्ते शय्यादौ तद् दुर्घटम्, स्वभिन्नतयोक्तानुमानात् पूर्वमात्मनो ग्रहीतुमशक्यत्वात् शरीरादेः ग्रहणे चातिरिक्तात्मवादे तदीयभोगाप्रसिद्धेः। परार्थत्वं यदि भोगानाश्रयत्वे सति भोगसाधनत्वम्, तदा पक्षे शरीरे हेत्वसिद्धिः अतिरिक्तावयविवादे शरीरस्य सङ्घातानात्मकत्वात्। यदि सङ्घातत्वं त्यक्त्वा जन्यत्वं हेतुरुच्येत, तदा व्याप्यत्वासिद्धिः, जडत्वस्योपाधित्वात्।

देहात्मवादे यागादिषु प्रवृत्तिरनुपपन्नेत्यपि न वक्तुं युक्तम्, वर्तमानजीवन एव फलप्रदेषु पुत्रेष्ट्यादियागेषु प्रवृत्तौ बाधकाभावात्। ये यागाः स्वर्गफलकतया निर्दिष्टाः, तेष्वपि प्रवृत्तिर्नानुपपन्ना, यथावर्णितस्य स्वर्गस्य सर्वस्पृहणीयतया देहात्मवादिनामपि तत्कामनायाः सम्भवेन तदर्थं तादृशयागेष्वपि प्रवृत्तिसम्भवात्। यदि देहात्मवादे सति देहे स्वर्गो न लभ्यते, मा लभ्यताम्, आनुषङ्गिकं लोकप्रशस्त्यादिफलं तु लभ्यत एव, उद्देश्यभूतं फलमपि कर्तृदेहस्थितमनःप्रवेशास्पदे

उत्तरभाविनि देहे भवितैव, परेभ्यो लाभप्रदेषु कर्मस्वपि सहृदयानां प्रवृत्तिबाहुल्यस्य लोकसिद्धतया तादृशयागेष्वपि मानवप्रवृत्तिः सुघटैव।

देहात्मवादे पुनर्जन्म नोपपद्यत इत्यपि शङ्का नोद्भावयितुमर्हा, अतिरिक्तात्मवादेऽपि पुनर्जन्मनः समर्थनासम्भवात् स्वाधिकरणक्षणध्वंसानधिकरणक्षणसम्बन्धरूपस्य जन्मनो नित्यात्मनो दुर्घटत्वात्, तदाधिकरणस्य सर्वस्यैव क्षणस्य पूर्वपूर्वतदधिकरणक्षणध्वंसाधिकरणतया तस्य स्वाधिकरणक्षणध्वसांनधिकरणक्षणाप्रसिद्धेः। यदि च नवोत्पन्नेन देहेन आत्मन आद्यो विजातीयः संयोग एव तज्जन्मत्वेनोपचर्यते, तदा तादृशो जन्मोपचारो मनोद्वारेण देहात्मवादेऽपि शक्योपपत्तिक एव, तद्वादे देहस्य तथा जन्माभावेऽपि तज्जन्यादृष्टविशिष्टमनसो भाविना नवेन देहेन सह तादृशसम्बन्धसम्भवात्।

देहात्मवादे बन्धमोक्षव्यवस्थाया अनुपपत्तिरपि नापादयितुं शक्या, शरीरान्तरभोग्यफलौपयिकादृष्टजनककर्मकर्तृत्वमेव बन्धः, तदभाव एव मोक्षः, इत्येवं बाधमोक्षयोः निर्वचनसम्भवात्, तथा हि यस्मिन् देहे न देहात्मत्वस्वरूपतत्त्वस्य योगप्रभवः साक्षात्कारः, स शरीरान्तरभोग्यफलौपयिकादृष्टजनककर्मकर्तृत्वाद् बद्धः, यश्च तादृशं तत्त्वं योगमहिम्ना साक्षात्कृत्य तादृशकर्मविमुखः, स मुक्तः। बद्ध इव मुक्तोऽपि यदि निरन्वयं नश्यत्येव, तदा कुतः कोऽपि देहो मुक्तये तत्त्वसाक्षात्काराय वैषयिकं सुखमुपेक्षेत, इत्यपि न शङ्कनीयम्, अतिरिक्तात्मवादेऽपि मुक्तात्मनो मृतोपमतया तादृश्याः शङ्कायाः समुद्भवात्।

देहगतानुभवजन्यं संस्कारं देहकृतकर्मजन्यमदृष्टं च वहतो नित्यस्य मनसः सम्बन्धेन नवनवेषु देहेषु पूर्वपूर्वदेहैरनुभूतस्यार्थस्य स्मरणं कृतकर्मणां फलभोगं चोपपाद्य देहात्मवादस्थापनया न कोऽपि लाभ इत्यपि वचो नोचितम्, न्यायवैशेषिकनये नित्यानां विभूनामनन्तजीवात्मनां स्वीकारेण तदपेक्षया देहात्मवादे बहुलाघवाद् अतिरिक्तात्मवादे च विभूनां नित्यानां च जीवात्मनामनन्तैर्मूतद्रव्यैः अनन्तैः कालक्षणैश्च सहानन्तसम्बन्धानां तदुत्पत्त्यादीनां च कल्पनीयतया बहुगौरवात्।

किंचातिरिक्तात्मवादे प्राणिनां पूर्वार्जितकर्मादृष्टतन्त्रतया स्वस्थितिपरिवर्तनेऽस्वातन्त्र्येण परैः क्रियमाणस्य शोषणस्योत्पीडनस्य च मौनभावेनाभ्युपगमो दुर्निवारः, विषमायाः सामाजिक्याः, आर्थिक्याश्च व्यवस्थायाः प्रजासुखसौविध्योदासीनस्य क्रूरस्य शासनतन्त्रस्य वा उन्मूलने शोषितस्य पीडितस्य च समुदायस्य प्रवृत्तिर्दुर्घटा; किन्तु देहात्मवादे नैष दोषः, यतो देहात्मवादे मनुष्यस्यैष बोधः सुकरो यत् स इदम्प्रथमतयोत्पन्नो नास्ति, तस्य किमपि पूर्वकृतमीदृशं कर्म, यदनुरोधात् तेन परैः क्रियमाणं शोषणमुत्पीडनं च स्वकर्मफलं मत्वा निष्क्रिय-

भावेन सह्येत, फलतया देहात्मवादी समुदायः स्वस्थितिपरिवर्तने स्वतन्त्रतया प्रवर्तितुं शक्नोति, तथा प्रवर्तमानश्च न्यायपूर्णां परस्परहितावहां सामाजिकीमार्थिकीं शासनिकीं च व्यवस्थां सम्पाद्य सुन्दरतरं विश्वं निर्मातुं प्रभवति ।

देहात्मवादे स्वसुखस्यैव सर्वैः काम्यतया, मरणोत्तरं च स्वकर्मणामुत्तरदायित्वस्याभावेन निःशङ्कीभूय मनुष्यः स्वसुखार्थमेव प्रवर्तेत, परार्थं च न चेष्टेत, परोत्पीडनेनैव यदि स्वाभ्युदयः साध्यः, तदा ततोऽपि न विरमेत्, इत्यपि नाशङ्कनीयम् लोकहिताय सोढक्लेशानां मृतपुंसां लोके जायमानायाः सम्मानचर्चाया इतिहासग्रन्थेषु तेषां सबहुमानमुल्लेखस्य च दर्शनेन स्वसुखाभिलाषशिथिलीकरणपूर्वकलोकहितावहकर्मसु प्रवृत्तिसम्भवेनोक्तदुष्प्रवृत्त्यभिवृद्धिभयस्य निरवकाशत्वात् ।

देहात्मवादेऽपरोऽप्येको गुणोऽयमस्ति यन्मनुष्योऽनैतिकं कदाचारकलुषितं स्वार्थप्रधानं जीवनं यापयतां जनानां लोकनिन्दां वीक्ष्य मरणोत्तरं त्रुटिपरिहारस्यावसराभावेन वर्तमानदेहपातात्पूर्वमेवात्मनो जीवनं नैतिकं निर्दोषं च यापयितुं सचेष्टो भवितुमर्हति, अतिरिक्तात्मवादे च भाविनि जन्मनि वर्तमानजीवनस्य त्रुटीनां परिहारस्यावसरप्राप्तिसम्भावनया वर्तमानं जीवनं सांसारिकसुखोपभोगेन नेतुकामस्तादृशसुखार्थमपेक्षितायाः समृद्धेः सम्पादनाय अन्यायपूर्णे कर्मण्यपि प्रवर्तितुमर्हति, तदेवं देहात्मवादे जीवने नैतिकताप्रतिष्ठापनस्याधिकतरं सम्भाव्यमानतया एष वाद एव लोकमङ्गलायोपादेयतां धत्ते इत्यतीव सुस्पष्टम् ।

• • •

# रामानुजमतानुसारेण बुद्धितत्त्वसमीक्षा

डॉ० एन्० एस्० रामानुजताताचार्यः

प्राचार्यः,

केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपतिः,

❋❋❋

**ज्ञानलक्षणविचारः—**

यथा नैयायिका बुद्धिः, उपलब्धिः, ज्ञानम् इत्येतेषां भेदं नाङ्गीकुर्वन्ति, तथैव रामानुजीया अपि। तेषां मते आत्मा ज्ञानरूपः सन् ज्ञानगुणक इत्यङ्गीक्रियते। तत्र धर्मधर्मिणोर्ज्ञानयोः साधारणं लक्षणं धर्मभूतस्य ज्ञानस्यासाधारणं लक्षणं च किम्? इति तदीयनानाग्रन्थपरामर्शपूर्वकं प्रथमतो विवेचयामः। यामुनाचार्या आत्मसिद्धौ[1]—**'संविदिति स्वाश्रयं प्रति सत्तयैव कस्यचित् प्रकाशनशीलो ज्ञानावगत्यनुभूत्यादिपर्यायनामा सकर्मकः संवेदितुरात्मनो धर्मः प्रसिद्धः'** इति प्राहुः। यः सत्तामात्रेण स्वाश्रयाय कञ्चिद्विषयं प्रकाशयति, सा संवित् तदेव ज्ञानमिति ज्ञानस्वरूपं वर्णितं भवति। श्रीभाष्ये[2]—**'विषयप्रकाशतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता'** इति ग्रन्थेन विषयप्रकाशकत्वं संविदपरपर्यायस्य ज्ञानस्य लक्षणमिति सूचितम्। तत्रैव[3]—'अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो घटमहं जानामि, इममर्थमवगच्छामि, संवेद्मीति सर्वेषामात्मसाक्षिकः प्रसिद्धः' इति भाषमाणा भाष्यकारा विषयनिष्ठं यद् व्यवहारानुगुण्यम्, तद्धेतुत्वात्मकं विषयप्रकाशकत्वं ज्ञानस्य लक्षणमिति समसूचयन्। तत्रैव—**'स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम्'**[4] इत्यभाषि। प्रकाशनमित्यस्य प्रकाशकमित्यर्थः। स्वसत्तयैवेत्यस्य स्वजन्यज्ञानमनपेक्ष्येत्यर्थः। तथा च स्वजन्यज्ञाननिरपेक्षं किञ्चिद्वस्तुप्रकाशकत्वं ज्ञानलक्षणमित्युक्तं भवति। विषयप्रकाशकत्वं प्रदीपादावप्यस्तीति तत्रातिव्याप्तिवारणाय स्वसत्तयैवेत्युक्तम्। प्रदीपादिस्तु स्वजन्यज्ञानमपेक्ष्यैव विषयप्रकाशक इति न तत्रातिव्याप्तिः। स्वाश्रयायेति स्वरूपकीर्तनम्।

**पुनस्तत्रैवोक्तम्**—'अनुभूतित्वं नाम वर्तमानदशायां स्वाश्रयं प्रति प्रकाशमानत्वं स्वसत्तयैव स्वविषयसाधनत्वं च'[5] इत्यभाणि। अनेन ग्रन्थेन ज्ञानस्य लक्षणद्वयमुच्यते—

---

१. आत्मसिद्धिः, पृ० १०; २. श्रीभाष्यम्, पृ० ४३८; ३. तत्रैव – पृ० ५५।

४. श्रीभाष्यम् —पृ० ४४९; ५. श्रीभाष्यम् — पृ० ४२०।

वर्तमानदशायां स्वाश्रयं प्रति प्रकाशमानत्वमेकं लक्षणम्, प्रकाशमानत्वमित्येतावन्मात्रोक्तौ घटादेरपि प्रकाशमानत्वात् तत्रातिव्याप्तिः स्यात्। तद्वारणाय स्वाश्रयं प्रतीति विशेषणम्। आत्मधर्माणामणुत्वनित्यत्वादीनां स्वाश्रययात्मने प्रकाशमानत्वमस्तीति तत्रातिव्याप्तिवारणाय स्वसत्तयैवेत्युक्तम्। स्वसत्तयैवेत्यस्य स्वगोचरज्ञानान्तरमनपेक्ष्येत्यर्थः। अतीतानुभवस्याधुना स्वसत्तयैव प्रकाशमानत्वं नास्ति, स्मरणादिसापेक्षप्रकाशवत्त्वात्तस्य। अतस्तत्राव्याप्तिवारणाय वर्तमानदशायामित्युक्तम्। विषयग्रहणकाल इति तदर्थः। अतीतानुभवस्येदानीं स्वसत्तयैव प्रकाशमानत्वं यद्यपि नास्ति, तथापि विषयग्रहणकाले तदस्तीति नाव्याप्तिः। इदं प्रथमलक्षणं ज्ञानं स्वयंप्रकाशमिति वादिनां मतेन।

ज्ञानमस्वयंप्रकाशमिति वादिनामप्युपगन्तव्यं द्वितीयं लक्षणं **'स्वसत्तयैव स्वविषयसाधनत्वम्'** इति। अत्रापि स्वाश्रयं प्रति, वर्तमानदशायामिति दलद्वयं प्रथमलक्षणादनुकृष्यते। तथा च स्वाश्रयं प्रति वर्तमानदशायां स्वसत्तयैव स्वविषयसाधनत्वमिति द्वितीयं ज्ञानलक्षणम्। अत्र साधनमित्येतावन्मात्रोक्तौ दण्डचक्रादेरपि साधनत्वात् तत्रातिव्याप्तिः, तद्वारणाय स्वाश्रयं प्रतीत्युक्तम्। चाक्षुषज्ञानं श्रावणविषयं न साधयतीति सर्वविषयसाधनत्वासम्भवव्यावृत्त्यर्थं स्वशब्दः। इन्द्रियव्यावृत्त्यर्थं स्वसत्तयैवेति पदम्। इन्द्रियं हि न स्वसत्तया प्रकाशकम्; किन्तु ज्ञानोत्पादनद्वारा। वर्तमानदशायामित्यतीतानुभवव्यावृत्तिः स्वाश्रयं प्रतीति परानुभवव्यावृत्तिरिति **श्रुतप्रकाशिका**[1]।

भगवद्यामुनमुनीनां परमगुरुभिर्विशिष्टाद्वैतदर्शनस्य प्रवर्तकैः **नाथमुनिभिर्न्यायतत्त्वाख्ये** ग्रन्थे अन्यानि चत्वारि ज्ञानलक्षणान्यभ्यधायिषत —

**अत्यन्तवेगितात्यन्तसौक्ष्म्यं निर्भरता तथा।**
**स्वसत्ताकालभाव्याप्तिर्ज्ञाने लक्ष्मचतुष्टयम्**[2] ॥ इति।

अत्यन्तवेगवत्त्वमिति प्रथमं लक्षणम्। ज्ञानापेक्षया अतिशयितवेगवद् अन्यन्नास्त्येव। इतरगताः सर्वेऽपि वेगा ज्ञानवेगाद् अप्रकृष्टा एव। धीसंकोचहेतुभूतपुण्यपापात्मककर्मापगममात्रेण मुक्तिकाले यद्वशाद् ज्ञानस्य सकलब्रह्माण्डवर्तिपदार्थसंयोगो भवति, तादृशो वेगोऽत्र अत्यन्तवेगशब्देन विवक्षितः। तथा चापकर्षानाश्रयवेगवत्त्वमत्यन्तवेगित्वमित्युक्तं भवति।

अत्यन्तसूक्ष्मत्वं **द्वितीयं लक्षणम्**। अत्यन्तसूक्ष्मत्वं नाम मुक्तौ सर्वव्यापनशीलाया बुद्धेः संसारदशायां मशकादिदेहेष्वत्यन्तसंकुचितत्वेऽपि यादृशसूक्ष्मत्ववशाद् बुद्ध्यवयवानां परस्परं प्रतिघातो न भवति, तादृशं सौक्ष्म्यमत्यन्तसौक्ष्म्यमित्युच्यते।

अत्यन्तनिर्भरत्वं **तृतीयं लक्षणम्**। अत्यन्तनिर्भरत्वं नामात्यन्तलाघवम्, अपकर्षानाश्रयं लघुत्वमित्यर्थः। पूर्वोक्तवेगातिशयोपयोगि सर्वोत्कृष्टलघुत्वमपि बुद्धेर्लक्षणम्।

---

१. श्रुतप्रकाशिका, पृ० ४२०–४२१; २. न्यायसिद्धाञ्जने उद्धृतोऽयं श्लोकः, पृ० ३११।

स्वसत्ताकालभाव्याप्तिश्चतुर्थं **लक्षणम्**। ज्ञानसत्ताकाले ज्ञानस्य नियमेन प्रकाश इत्यर्थः। स्वाधिकरणकालत्वव्यापकस्वीयप्रकाशवत्त्वं ज्ञानस्य लक्षणमिति फलति।

अत्रेदमाशङ्क्यते—अत्यन्तवेगवत्त्वमिति प्रथमलक्षणस्य ईश्वरज्ञाने नित्यसूरीणां ज्ञानेषु चाव्याप्तिः। तेषां नित्यविभुत्वेन क्रियाया एवाभावेन तद्धेतुभूतस्य वेगस्य प्रसक्त्यभावात्। अत एवात्यन्तलाघवरूपं तृतीयलक्षणमपि न युज्यते। वेगप्रसक्तिरहितेषु तेषु वेगानुकूललाघवस्याप्यभावेन लक्षणस्याव्याप्तेः। एवमात्मनि स्वसत्ताकालिकप्रकाशनियमसत्त्वात् चतुर्थलक्षणं तत्रातिव्याप्तमिति। एवं नित्यविभूतौ च स्वयंप्रकाशायामतिव्याप्तिरिति।

तत्रेदं समाधानम्—अत्यन्तवेगवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वमिति प्रथमलक्षणं परिष्कर्तव्यम्। ईश्वरादिज्ञानानां तादृशज्ञानत्वरूपोपाधिमत्त्वाद् नाव्याप्तिः। एवं तृतीयलक्षणमपि अत्यन्तलाघववद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वमिति परिष्कार्यम्। अतो न पूर्वोक्तदोषः। चतुर्थे लक्षणे पराक्त्वे सति नित्यविभूत्यन्यत्वं विशेषणं देयम्। अत आत्मनि नित्यविभूतौ च नाव्याप्तिः। आत्मनः प्रत्यक्त्वेन पराक्त्वाभावाद् नित्यविभूतेर्नित्यविभूत्यन्यत्वाभावाच्चेति।

तत्त्वमुक्ताकलापे **श्रीमद्वेदान्तदेशिकैः**—**'ज्ञातुर्ज्ञेयावभासो मतिः'**[1] इति आत्मधर्मभूतज्ञानस्य लक्षणमुक्तम्। 'अहमिदं जानामीति अहमर्थाश्रयतया सिध्यन् सकर्मकः प्रकाशो मतिरित्यर्थः' इति सर्वार्थसिद्धौ तैरेव व्याख्यातं च। तेन स्वाश्रयाहमर्थविशिष्टस्वग्राहकत्वे सति विषयग्राहकत्वं बुद्धेर्लक्षणमिति लभ्यते। यद्वा स्वाश्रयविशिष्टस्वग्राहकत्वमित्येकं लक्षणम्, विषयग्राहकत्वमित्यपरं लक्षणमित्येवं लक्षणद्वयपरतयापि व्याख्यातुं शक्यते।

न्यायसिद्धाञ्जने—**'सकर्मकावभासत्वं सकर्तृकावभासत्वमित्यादि तल्लक्षणम्'**[2] इत्यभिहितम्। सकर्मकावभासत्वमित्यस्य स्वभिन्ननिष्ठविषयतानिरूपकज्ञानत्वमित्यर्थः। ज्ञानत्वमात्रोक्तौ धर्मिण्यात्मन्यतिव्याप्तिः, तद्वारणाय निरूपकान्तम्। विषयतायां स्वभिन्ननिष्ठत्वानिवेशे पुनरप्यात्मनि स्वनिष्ठविषयतानिरूपकेऽतिव्याप्तिः। ज्ञानत्वानिवेशे शक्तावतिव्याप्तिः, सिद्धान्ते शक्तेरपि सविषयकत्वेन स्वभिन्ननिष्ठनिषयतानिरूपकत्वात्। सकर्तृकावभासत्वमित्यस्य अहमर्थनिष्ठाधारतानिरूपकज्ञानत्वमित्यर्थः। सुखादावतिव्याप्तिवारणाय ज्ञानत्वनिवेशः। आत्मन्यतिव्याप्तिवारणाय निरूपकान्तनिवेशः। आदिशब्देन आत्मभिन्नत्वे सति नित्यविभूतिभिन्नत्वे स्वयंप्रकाशत्वरूपं लक्षणान्तरं सूच्यत इति व्याख्यातारः। एतावता धर्मभूतज्ञानलक्षणानि समालोचितानि।

श्रीमति **रहस्यत्रयसारे**[3] वेदान्तदेशिकैरेव ज्ञानलक्षणमेवं स्वयंप्रकाशत्वं च धर्मभूतज्ञानस्य धर्मिणः, आत्मनश्च साधारणम्। ज्ञानत्वं नाम कस्यचित्प्रकाशत्वम्,

---

१. तत्त्वमुक्ताकलापे जडद्रव्यसरः, श्लोकसंख्या—७; २. न्यायसिद्धाञ्जनम्, पृ० ३९९।

३. रहस्यत्रयसारः, पृ० ५६।

स्वस्य परस्य वा व्यवहारानुगुण्यापादकत्वमिति यावदिति। ज्ञानं यमर्थं विषयीकरोति, सोऽर्थो व्यवहारानुगुणो भवति। अतो विषयनिष्ठं यद् व्यवहारानुगुण्यम्, तदापादकत्वं ज्ञानस्य लक्षणमिति पर्यवसन्नम्। विषयपदेन स्वं स्वान्यद्वा विवक्षितम्। आत्मनः स्वविषयकत्वाङ्गीकारात् स्वनिष्ठव्यवहारानुगुण्यापादकत्वाख्यं ज्ञानत्वमस्ति। धर्मभूत-ज्ञानस्य स्वविषयकत्वं स्वान्यविषयकत्वं चास्तीति स्वपरान्यतरनिष्ठव्यवहारानुगुण्या-पादकत्वसद्भावाल्लक्षणसमन्वयः। किञ्चिन्निष्ठव्यवहारानुगुण्यापादकत्वं ज्ञानत्वमिति परमार्थः।

**धर्मिरूपं ज्ञानं धर्मरूपं ज्ञानमिति ज्ञाने भेदः--**

रामानुजमते आत्मा स्वयं ज्ञानरूपः सन् ज्ञानगुणक इत्यङ्गीक्रियते। तत्र प्रमाणं तु **'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः[1]'** इति श्रुतिः। अत्र द्रष्टृश्रोतृमन्तृपदैः विशेषतो बौद्धपदेन सामान्यतश्चात्मनो ज्ञातृत्वं प्रतिपाद्य विज्ञानात्म-शब्देन ज्ञानस्वरूपत्वं प्रत्यपादि। न च विज्ञानम् आत्मा स्वभावो धर्मो यस्येति व्युत्प-त्त्या विज्ञानात्मशब्द आत्मनो ज्ञातृत्वमेव प्रतिपादयति, न ज्ञानस्वरूपत्वमिति वाच्यम्, सामान्यतो विशेषतश्च प्रतिपादितस्यैव ज्ञातृत्वस्य पुनः कथने पौनरुक्त्यप्रसङ्गात्। तथा च विज्ञानात्मशब्द आत्मनो ज्ञानस्वरूपत्वे प्रमाणम्। एवं चात्मस्वरूपस्य तद्धर्मभूत-ज्ञानस्य च ज्ञानत्वं सिद्धान्त इत्युभयसाधारणं ज्ञानत्वं कीदृशमिति जिज्ञासा जायते।

अत्रोक्तं **तत्त्वमुक्ताकलापे**—**'अनुगतकथने ज्ञानमर्थप्रकाशः'**[2] इति। अर्थप्रकाशत्वं धर्मधर्मिसाधारणं ज्ञानलक्षणमिति तदर्थः। अर्थशब्दः स्वपरसाधारणः। स्वात्मकार्थ-प्रकाशकत्वं धर्मिभूतस्य ज्ञानस्य, स्वस्वातिरिक्तार्थप्रकाशकत्वं धर्मभूतज्ञानस्येत्युभयोः विशेषः। पूर्वोदाहृतरहस्यत्रयसारग्रन्थोऽप्यत्र भाव्यः।

**न्यायसिद्धाञ्जनेऽपि—**

**स्वस्यैव भासको दीपः स्वात्मनोऽन्यस्य च प्रभा।**
**एवं भेदोऽस्ति साम्येऽपि ज्ञानयोर्धर्मधर्मिणोः**[3] ॥ इत्युक्तम्।

दीपोऽपि तेजोद्रव्यम्, तस्या प्रभाऽपि तेजोद्रव्यम्। उभयोर्दीपतत्प्रभयोस्तेजस्त्वे समानेऽपि दीपः स्वमात्रभासकः, प्रभा तु स्वस्वातिरिक्तोभयप्रकाशकेति यथा दीपतत्प्र-भयोर्विशेषः, तथा आत्मतद्धर्मभूतज्ञानयोर्द्वयोरपि ज्ञानत्वे समानेऽपि आत्मा स्वमात्र-प्रकाशकः, तद्धर्मभूतज्ञानं तु स्वपरोभयप्रकाशकमिति धर्मधर्मिणोर्ज्ञानयोर्भेद इति उक्त-कारिकाया अर्थः।

ननु देवदत्तस्य घटज्ञानं यज्ञदत्तस्य पटज्ञानमित्यादौ कर्मकर्तृसम्बन्धिन्येव ज्ञानशब्दप्रयोगात् कर्मकर्तृसम्बन्धित्वं ज्ञानपदप्रवृत्तिनिमित्तम्। कर्मकर्तृसम्बन्धरहिते

१. प्रश्नोपनिषद्; २. तत्त्वमुक्ताकलापः, जीवसरः, श्लो० ५; ३. न्यायसिद्धाञ्जनम्—पृ० २०३।

आत्माख्ये ज्ञाने ज्ञानशब्दवाच्यत्वं कथमिति चेत्, अत्राहुः—**'ज्ञानस्य सम्बन्धिशब्दतया व्युत्पत्तिमात्रम् । प्रवृत्तिनिमित्तं तु कस्यचिद् व्यवहारानुगुण्ये निरपेक्षहेतुत्वम्'**[1] इति ।

अस्यायमाशयः—यथा अयः पञ्जरस्थः सिंह इति व्युत्पत्तिग्रहोपायस्य पञ्जरस्य न सिंहपदप्रवृत्तिनिमित्तत्वम्, एवं कर्मकर्तृसम्बन्धिक्रियापरपर्यायभाववाचकत्वं ज्ञानशब्दस्य व्युत्पत्तिमात्रे ( ल्युडन्ततया निष्पादनमात्रे ) निमित्तम्, न तु ज्ञानशब्दस्य कर्मकर्तृसम्बन्धिक्रियात्वं प्रवृत्तिनिमित्तमिति । यद्वा ज्ञानशब्दस्य कर्मकर्तृसम्बन्धिज्ञानवाचकतया व्युत्पत्तिमात्रं व्यवहाराधीनप्राथमिकशक्तिग्रहमात्रम्, न तु कर्मकर्तृसम्बन्धिज्ञानत्वस्य ज्ञानशब्दप्रवृत्तिनिमित्तत्वग्रहः । यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ सिद्धपदसान्निध्यात् पिकपदशक्तिग्रहे सहकारतर्वधिकरणकत्वादेरपि शक्ये प्रकारतया भानेऽपि तस्य शक्योपलक्षणत्वमेव न शक्यतावच्छेदकत्वम्, तद्वदिति भावः, तर्हि ज्ञानशब्दस्य धर्मधर्मिसाधारणं प्रवृत्तिनिमित्तं किमिति चेत्, तत्राह—प्रवृत्तिनिमित्तं तु इति ।

**अत्रार्थे भाष्यविरोधशङ्कापरिहारौ—**

ननु **श्रीभाष्ये**[2] जिज्ञासाधिकरणे निर्विशेषज्ञानखण्डनावसरे अकर्मकस्याकर्तृकस्य च ज्ञानस्य निराकरणात् कर्तृकर्मसम्बन्धित्वमेव ज्ञानशब्दप्रवृत्तिनिमित्तमिति प्रतीयत इति तद्विरोधः । तत्रैव **श्रुतप्रकाशिकायां**[3] कर्मकर्तृसम्बन्धित्वं व्युत्पत्तिनिमित्तमस्तु, न प्रवृत्तिनिमित्तान्तरकल्पनम्, तत्तु ज्ञप्तिमात्रमित्याशङ्क्य, प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनम् । प्रयोगश्च सम्बन्धिन्येवार्थे इति नार्थान्तरकल्पना स्यात् । आत्मस्वरूपभूतज्ञानवाचिशब्दानां सम्बन्धिशब्दत्वं त्वन्मतेऽप्यनुपपन्नमिति चेत्, न, स्वरूपगोचराणां स्वयंप्रकाशत्वे रूढानां ज्ञानादिशब्दानामनुभूत्यादिशब्देभ्यः शब्दान्तरत्वादिति समाहितम् । तेन कर्मकर्तृसम्बन्धित्वस्यैव ज्ञानशब्दप्रवृत्तिनिमित्तताप्रतीतेरिति चेत्, अत्रोच्यते—जानात्यादिशब्दवाच्यं यद् धर्मभूतं ज्ञानम्, तस्यैव कर्मकर्तृसम्बन्धित्वनियमो भाषितः, तावता तत् प्रवृत्तिनिमित्तत्वेन विवक्षितमिति न भ्रमितव्यम् । भाष्य एवान्यत्र बहुषु स्थलेषु आत्मनोऽपि ज्ञानस्वरूपतायाः सप्रमाणं साधितत्वेन तत्राव्याप्त्यापत्तेः । स्वप्रकाशकत्वमेव ज्ञानपदवाच्यतावच्छेदकं धर्मधर्मिसाधारणम् । **'चैतन्यस्वभावता हि स्वयंप्रकाशता'** इत्युक्तं प्रकरणान्तरे **श्रीभाष्ये**[4] । **तत्त्वटीकायाञ्च**—**'स्वप्रकाशत्वेन निमित्तेन धर्मधर्मिणोः शब्दानुवृत्तेः'**[5] इति देशिकचरणा अन्वग्रहीषुः । अतो न भाष्यविरोधः ।

---

१. तत्रैव—पृ० २०६-२०७; २. श्रीभाष्यम्—पृ० ४८३; ३. श्रुतप्रकाशिका, पृ०, ४८४ ।
४. श्रीभाष्यम्—पृ०-४६८; ५ तत्त्वटीका—पृ० ४८४ ।

श्रुतप्रकाशिकायास्त्वयमाशयः[1]—ज्ञादिधातोः सविषयकार्थवाचित्वात् ततो निष्पन्नाना ज्ञानादिशब्दानां न धर्मिवाचकत्वम्। धर्मधर्म्युभयसाधारणस्वप्रकाशत्वविशिष्टार्थे रूढास्तु ज्ञानादिशब्दाः अश्वकर्णादिशब्दवद् अव्युत्पन्ना इति। प्रथमतः सविषयकमात्रे व्युत्पत्तावपि आत्मन्यपि ज्ञानादिशब्दप्रयोगानुसारेण ज्ञाधातोः धर्मधर्म्युभयसाधारणं किञ्चित्प्रकाशकत्वमेव प्रवृत्तिनिमित्तमिति देशिकचरणानामाशयः।

**धर्मधर्मिविषये रहस्यत्रयसारसूक्तिपरिशीलनम्—**

श्रीमद्वेदान्तदेशिककृते रहस्यत्रयसारनामके मणिप्रवालभाषामये ग्रन्थे[2]— 'धर्मधर्मिणोः ज्ञानत्वं स्वयंकाशत्वं च साधारणम्। धर्मभूतज्ञानस्य विषयित्वं विशेषः। विषयित्वं च स्वव्यतिरिक्तार्थप्रकाशकत्वम्' इत्यनुगृहीतम्।

तस्य साक्षात्स्वामी इति प्रख्यातैर्वेदान्तरामानुजस्वामिभिः कृतायां मणिप्रवालभाषामय्यां **सारास्वादिनीनाम्न्यां** व्याख्यायाम् एवं भाववर्णनं कृतम्—धर्मभूतो ज्ञानस्वरूप आत्मा स्वयंप्रकाशत्वाद् यद्यपि स्वप्रकाशो भवति; तथापि न स्वभिन्नप्रकाशकः। अतः स्वभिन्नप्रकाशकत्वरूपं विषयित्वं नास्ति तस्य। धर्मभूतं ज्ञानं तु स्वव्यतिरिक्तं घटादिविषयं प्रकाशयतीति स्वव्यतिरिक्तप्रकाशकत्वरूपं विषयित्वं तस्यास्ति। न चात्मनोऽपि अहमित्मेवं प्रत्यक्त्वैकत्वविशिष्टतयैव प्रकाशात् स्वातिरिक्तप्रत्यक्त्वादिप्रकाशकत्वाद्विषयित्वमस्त्येवेति वाच्यम्, आत्मगतानां प्रत्यक्त्वैकत्वसुखत्वानामात्मवत् स्वयंप्रकाशत्वाद आत्मरूपज्ञानविषयत्वं नास्तीति नात्मनः प्रत्यक्त्वादिविषयकत्वम्, किन्तु स्वमात्रविषयकत्वम्। तथा च नात्मनः स्वातिरिक्तप्रकाशकत्वरूपं विषयित्वमिति। यथा वा घटमहं जानामीति धर्मभूते ज्ञाने भासमाने कर्मतया भासमानघटादिविलक्षणता (ज्ञानकर्मतया) भासमानं ज्ञानत्वं स्वयंप्रकाशम्, तथैव अहमिति धर्मिण्यात्मनि भासमाने तस्य कर्मतां विना भासमानं प्रत्यक्त्वादिकमपि स्वयंप्रकाशमेति।

अन्ये त्विमं पक्षं नाद्रियन्ते, तेषामयमाशयः—धर्मिण आत्मन इव तद्धर्माणां ज्ञानत्वप्रत्यक्त्वादीनां स्वयंप्रकाशत्वमुपगम्य धर्मिविषयत्वं नास्तीत्युच्यते चेत्, आत्मस्वरूपगतमनुकूलत्वरूपं सुखत्वं निर्विकारात्मस्वरूपप्रकाशेन सर्वदा प्रकाशत इति विरोधपरिहारग्रन्थेन विरोधः प्रसज्यते। आत्मस्वरूपे सर्वदा आनुकूलत्वं प्रकाशत इत्यनेन आत्मन आनुकूल्यविषयकत्वं हि स्फुटम्। आनुकूल्यं निर्विकारात्मस्वरूपप्रकाशेन प्रकाशत इत्यनेन आनुकूल्यप्रकाश आत्मस्वरूपप्रकाशायत्त इति लाभाद् आनुकूल्यस्य स्वयंप्रकाशत्वं नास्तीति स्पष्टम्। तेन तत्तुल्ययोगक्षेमयोः प्रत्यक्त्वैकत्वयोरपि अस्वयंप्रकाशत्वमात्मस्वरूपविषयत्वं च सिद्धम्।

किञ्च न क्वापि ग्रन्थे प्रत्यक्त्वादीनां स्वयंप्रकाशत्वमुक्तम्। ननु ग्रन्थान्तरे मा नाम वोचि। रहस्यत्रयसारस्थपूर्वप्रदर्शितसूक्तिरेव तत्र प्रमाणमिति चेत्, तस्याः

१. श्रुतप्रकाशिका–पृ० ४८४;

२, रहस्यत्रयसारः–पृ० ५६।

सूक्तेरपि न भवदुक्तोऽर्थः। **'विषयित्वमावदु तन्नै ओलिन्ददोन्रै प्रकाशिप्पिक्कै'** इति हि **रहस्यत्रयसारग्रन्थः**[1]। तत्र ओलिन्दन्दोन्रु इत्यस्य अतिरिक्तमिति नार्थः; किन्तु पृथक्सिद्धमित्यर्थः। स्वापृथक्सिद्धभिन्नप्रकाशकत्वमिति तु फलितोऽर्थः। धर्मभूतज्ञानं स्वापृथक्सिद्धभिन्नान् घटादीन् प्रकाशयति। आत्मा तु स्वापृथक्सिद्धान् प्रत्यक्त्वादीनेव प्रकाशयति, न स्वपृथक्सिद्धान्। तस्मान्न धर्मभूतज्ञानलक्षणस्य धर्मिण्यतिव्याप्तिरिति भाववर्णनसम्भवादिति।

एवं चात्मनि आत्मातिरिक्तं किमपि न भासत इत्येकः पक्षः। अस्मिन् पक्षे प्रत्यक्त्वैकत्वानुकूलत्वानि आत्मगतानि स्वयंप्रकाशानि। आत्मनि आत्मा तदपृथक्सिद्धाः प्रत्यक्त्वैकत्वानुकूलत्वाख्या धर्माश्च भासन्ते। अतः प्रत्यक्त्वादयो न स्वयं प्रकाशा इत्यन्यः पक्षः। प्रथमः पक्षः साक्षात्स्वाम्युपज्ञ इति **वीरराघवाचार्याः**। वस्तुतस्ततः पूर्वमेव सर्वार्थसिद्धिव्याख्यायामा**नन्ददायिन्यां** पक्षोऽयमुपन्यस्त इति प्राचीनाचार्यसंमत एवायं पक्ष इति निर्णयामः। द्वितीयपक्षस्तु उपनिषद्भाष्कारैः न्यायसिद्धाञ्जनव्याख्यायामुपक्षिप्तः—'प्रत्यक्त्वैकत्वादिकं स्वरूपातिरिक्तधर्मान्तरमेव। न च तद्विषयत्वे विषयित्वप्रसङ्ग इति वाच्यम्, स्वापृथक्सिद्धधर्मव्यतिरिक्तविषयत्वं नास्तीत्यत्र तात्पर्याद् विषयित्वभावप्रवादस्य'[2] इति।

**पक्षयोरनयोर्युक्तायुक्तत्वविवेचनम्—**

अत्र केचिदाहुः—द्वितीयपक्ष एव श्रुतप्रकाशिकादिग्रन्थस्वारस्यसिद्धः। तथा हि जिज्ञासाधिकरणे श्रुतप्रकाशिकायाम्—'अहमर्थः प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भाति। न ह्यर्थान्तरमहमर्थो विषयीकर्तुमलम्'[3] इति श्रीसूक्त्या अहमर्थस्यात्मनः प्रत्यक्त्वादिप्रकारकस्वात्मकज्ञानविशेष्यत्वमुक्तम्। तेन प्रत्यक्त्वादेः धर्मिभास्यत्वावगमात् स्वयंप्रकाशत्वं श्रुतप्रकाशिकाविरुद्धम्। **'न ह्यर्थान्तरमहमर्थो विषयीकर्तुमलम्'** इति प्रत्यक्त्वादिव्यतिरिक्तस्य धर्मिणा विषयीकरणायोगप्रतिपादनेनापि स्पष्टीकृतमेतत्।

तत्रत्यभावप्रकाशिकायाम्—'प्रत्यक्त्वानुकूलत्वैकत्वभिन्नात्मधर्मग्रहे आत्मनः सामर्थ्याभावात्[4]' इति कथनेन प्रत्यक्त्वादीनां ग्रहणे आत्मनः सामर्थ्यमस्तीत्यवगम्यते। प्रत्यक्त्वादीनां ग्रहणं च प्रत्यक्त्वादिविषयकत्वमेव।

किञ्च तत्त्वमुक्ताकलापे—

**ईदृक्त्वात्यन्तशून्ये न हि मिषति मतिर्नापि युक्तिस्तथात्वे**
**सामग्रीभेदवेद्ये पृथगवगतिरस्त्वत्र नैवान्यथात्वात्।**
**धीत्वादेर्वा विशिष्टं प्रथयति जनिता बुद्धिराद्याक्षयोगैः**
**तस्मात्संस्कारशून्येन्द्रियजनितमतिर्निर्विकल्पेति वाच्या**[5] ॥

---

१. रहस्यत्रयसारः–पृ०५६; २. न्यायसिद्धाञ्जनव्याख्या—पृ० १९९।
३. श्रुतप्रकाशिका—पृ० ४।८२; ४. भावप्रकाशिका—पृ० ४८२।
५. तत्वमुक्तकलापः, बुद्धिसरः, श्लो० ३२।

इति श्लोकस्य व्याख्यानावसरे सर्वार्थसिद्धौ—'प्रथमाक्षसन्निपातजा बुद्धिर्विशिष्टविषया धीत्वात् सम्प्रतिपन्नवत्'[1] इति निर्विकल्पकस्यापि विशिष्टविषयकत्वं संसाध्य 'आत्मस्वरूपप्रत्ययश्चाहंत्वादिविशिष्टप्रकाशात्मेत्यङ्गीचक्रुः' इत्यनेन आत्मस्वरूपभूतज्ञानस्यापि प्रत्यक्त्वादिविशिष्टात्मविषयकत्वमुक्तम्। इयं सूक्तिरपि प्रत्यक्त्वादेः स्वयंप्रकाशत्वं नानुमन्यते।

किञ्च निर्विशेषज्ञानखण्डनावसरे भाष्यकारैः—'ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम्, सत्यमुक्तम्। स त्वात्मानुभवः, स च सविशेष इति स्थापयिष्यते'[2] इति आत्मस्वरूपज्ञानस्य सविशेषत्वमुक्तम्। सविशेषत्वं नाम विषयितासम्बन्धेन विशेषविशिष्टत्वम्, सविकल्पकपर्यायत्वात्सविशेषपदस्य। अत्रैवं प्रतिज्ञाय पश्चात् तत्स्थापनावसरे **'सुखमहमस्वाप्सम्'** इति प्रत्यभिज्ञां प्रदर्श्य तया स्वापदशायामपि आत्मनः प्रत्यक्त्वादयो ज्ञायन्त इत्युक्तम्। सुषुप्तौ धर्मभूतज्ञानस्य निर्विषयकतायाः 'पुंस्त्वादिवत्' इति सूत्रे उक्ततया प्रत्यक्त्वादय आत्मस्वरूपभूतज्ञानेनैव विषयीक्रियन्त इति वक्तव्यम्। एवं च तेषां धर्मिभास्यत्वमुक्तभाष्यसिद्धं च।

अपि च प्रत्यक्त्वादेः स्वयंप्रकाशत्वस्वीकारे **'बुद्धिर्द्रव्यं विकारान्वयत इतरवद् बोद्धृवच्चाजडत्वात्'** इति श्लोकव्याख्याने सर्वार्थसिद्धौ—'तदयं प्रयोगः—बुद्धिः द्रव्यम्, स्वयंप्रकाशत्वात्, आत्मवत्'[3] इति प्रदर्शितेऽनुमाने द्रव्यत्वाभाववति प्रत्यक्त्वादौ स्वयंप्रकाशत्वरूपहेतुसत्त्वाद् व्यभिचारो दुरुद्धरः। तस्मात् प्रत्यक्त्वादयो न स्वयंप्रकाशाः, अपि तु आत्मरूपधर्मिभास्या इत्याहुः।

अपरे तु—

**स्वस्यैव भासको दीपः स्वात्मनोऽन्यस्य च प्रभा।**
**एवं भेदोऽस्ति साम्येऽपि ज्ञानयोर्धर्मधर्मिणोः[4]॥**

इति न्यायसिद्धाञ्जनस्वारस्याद् आत्मा स्वमात्रविषयकः, न प्रत्यक्त्वादिविषयक इत्यवगम्यते। न च तावता आत्मनो निर्विशेषत्वप्रसङ्गः, प्रत्यक्त्वादिविशेषवत्त्वात्। प्रत्यक्त्वाद्यविषयकोऽपि आत्मा प्रत्यक्त्वादिमान्, अतो न निर्विशेषत्वप्रसङ्गः। प्रत्यक्त्वादेः स्वयंप्रकाशतया सुषुप्तावात्मवद् भानमस्तीति तस्य प्रबोधानन्तरं **'सुखमहमस्वाप्सम्'** इति प्रत्यभिज्ञा उपपद्यते। न च प्रत्यक्त्वादेः स्वयंप्रकाशत्वाङ्गीकारे ज्ञानत्वापत्तिः,

---

१. सर्वार्थसिद्धिः—पृ० २०५; २. श्रीभाष्यम्—पृ० ४४२—४४३।
३. सर्वार्थसिद्धिः—पृ० १७९; ४. न्यायसिद्धाञ्जनम्—पृ० २०३।

स्वयंप्रकाशद्रव्यत्वस्यैव ज्ञानपदप्रवृत्तिनिमित्तत्वेन प्रत्यक्त्वादौ स्वयंप्रकाशत्वसत्त्वेऽपि द्रव्यत्वाभावाद् ज्ञानत्वाप्रसक्तेः ।

यदुक्तं प्रत्यक्त्वादेः स्वयंप्रकाशत्वाङ्गीकारे **'बुद्धिर्द्रव्यं स्वयंप्रकाशत्वात्, बोद्धृवत्'** इति देशिकोक्तानुमाने द्रव्यत्वाभाववति प्रत्यक्त्वादौ स्वयंप्रकाशत्वसत्त्वाद् व्यभिचार इति, तत्, न, तत्र स्वयंप्रकाशत्वं स्वाधीनस्वविशेष्यकव्यवहारानुगुण्यरूपं विवक्षितम् । आत्मनामिव धर्मभूतज्ञानस्यापि ज्ञानत्वप्रत्यक्षत्वानुमितित्वादिप्रकारकस्वविशेष्यकव्यवहारानुगुण्यसत्त्वाद् हेतुरस्ति । प्रत्यक्त्वादौ तु स्वविषयकव्यवहारानुगुण्यमेवास्ति, न तु स्वविशेष्यकव्यवहारानुगुण्यम्, तत्र धर्मान्तरस्याप्रकारत्वादिति हेत्वभावान्न व्यभिचार इति वदन्ति । पक्षद्वयमपि तत्तद्ग्रन्थारूढमिति यः कोऽपि पक्षः संमन्तव्यो नात्रातीव विवदितव्यमिति मन्यामहे ।

**प्रकाशशब्दार्थविचारः—**

ज्ञानस्य लक्षणकथनवेलायां विषयप्रकाशकत्वं लक्षणमिति पूर्वं बहुग्रन्थप्रदर्शनपूर्वकं निष्कृष्टम् । तत्र को नाम प्रकाश इतीदानीं विचार्यते । न तावद् ज्ञानजन्यो विषयगतः कश्चिद्धर्मविशेषः प्रकाश इति वक्तुं शक्यम् । मीमांसकसम्मतस्य प्राकट्यापरपर्यायस्य तादृशधर्मविशेषस्य भाष्यादौ दूषितत्वात् ।

तत्र तावदात्मसिद्धौ यामुनाचार्यैः[१]—**'कर्तर्हि प्रकाशते पदार्थः'** इति प्रश्नमुपक्षिप्य **'अनुभवादूरत्वं स्मृतिनिमित्तम्'** इति न्यायतत्त्वग्रन्थोद्धारपूर्वकं **'संविददूरत्वं प्रकाशः'** इत्युक्तम् । अनुभवादूरत्वं स्मृतिनिमित्तमित्यस्य स्मरणप्रयोजकोऽनुभवसम्बन्धः प्रकाश इत्यर्थः । अनुभवादूरत्वं हि नाम अनुभवदूरत्वाभावः । दूरत्वं चासम्बन्धः, तदभावरूपमदूरत्वं सम्बन्धात्मकम् । तथा चानुभवसम्बन्धः प्रकाश इत्येव पर्यवस्यति । स च सम्बन्धो द्रव्येषु संयोगात्मको द्रव्याश्रितेष्वद्रव्येषु संयुक्ताश्रितत्वम् ।

ननु विषयगतः प्रकाशो ज्ञानसंयोग-ज्ञानसंयुक्ताश्रितत्वान्यतररूपोऽस्तु नाम, ज्ञानगतः प्रकाशः किं रूप इति चेत्, ज्ञानगतः प्रकाशोऽपि ज्ञानसम्बन्ध एव । सम्बन्धस्तु तत्र ज्ञानतादात्म्यरूप इति ।

**श्रीमति भाष्ये—'प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्'**[२] इत्यन्वग्राहि । तस्य श्रुतप्रकाशिकायामेवं भाववर्णनं कृतम्—'चिदचिदशेषपदार्थापेक्षया साधारणं ज्ञानगतं चिद्व्यवहारानुगुण्यं च प्रकाशः । स्वपरव्यवहारानुगुण्यं प्रकाशः । चिदचिदशेषपदार्थास्तदा हि व्यवहारानुगुणाः, यदा ज्ञानं सन्निधत्ते । तत्राचिदंशस्य स्वव्यवहारसामग्र्यन्तर्भूतज्ञानवत्त्वं व्यवहारानुगुण्यम् । वेद्यत्वे चिदंशस्याप्येवम् । स्वप्रकाशत्वे तु स्वव्यवहारसामग्र्यां ज्ञानान्तरानपेक्षया स्वस्यान्तर्भावः'[३] इति । अनेन

१. आत्मसिद्धिः, पृ० ३२; २. श्रीभाष्यम्—पृ० ४५०; ३. श्रुतप्रकाशिका, पृ० ४५० ।

श्रुतप्रकाशिकाग्रन्थेन व्यवहारप्रयोजनकज्ञानसम्बन्ध एव व्यवहारानुगुण्यम्, स एव प्रकाशः। ज्ञानसम्बन्धश्च चिच्छब्दितज्ञाने तादात्म्यरूपः। अन्यत्र तु संयोग-संयुक्ताश्रयणान्यतररूप इति निर्णीयते। रत्नपेटिकायामप्येवमेवोक्तम्। श्रीभाष्यव्याख्यायां तत्त्वटीकायां तु—'व्यवहारानुगुण्यं तु व्यवजिहीर्षातिरिक्तो व्यवहारहेतुविशेषः। उत्पन्ने हि ज्ञाने विषयस्य विषयिणश्च ज्ञानानुत्पत्तिरूपमपि व्यवहारानर्हत्वं निवर्तते'[1] इत्यभ्यधायि।

अयमस्य ग्रन्थस्याशयः—व्यवहारानुगुण्यं नाम व्यवहारानर्हतानिवृत्तिः। व्यवहारानर्हता च व्यवहारविशेषकारणसामान्याभावः। व्यवहारविशेषकारणानि च व्यवहर्तव्यज्ञानं व्यवजिहीर्षा व्यवहारानुकूलप्रयत्नश्च। सामान्यकारणकालादेः सर्वदा सत्त्वात् तदभावासम्भवाद् विशेषकारणेत्युक्तम्। इदं च व्यवहारानुगुण्यं घटादेर्विषयस्य धर्मभूतज्ञानस्य धर्मिणश्च साधारणम्। व्यवहर्तव्यतासम्बन्धेन बुबोधयिषापूर्वकव्यवहारं प्रति विषयत्वतादात्म्यान्यतरसम्बन्धेन ज्ञानस्य हेतुतया व्यवहर्तव्यज्ञानरूपव्यवहारविशेषकारणसमवधाने विषये धर्मधर्मिणोश्च व्यवहारविशेषकारणसामान्याभावरूपा व्यवहारानर्हता निवर्तत इति। अन्ततः श्रुतप्रकाशिकोक्तार्थ एव तत्त्वटीकाया अपि पर्यवसानमिति सूक्ष्मविवेचका जानीयुरेव।

**बुद्धेर्द्रव्यत्वम्—**

रामानुजाचार्यमते आत्मनो धर्मभूता या बुद्धिः, तस्या अपि द्रव्यत्वमिष्यते। तथा च श्रीभाष्यम्—**'ज्ञानमपि हि द्रव्यमेव। प्रभाद्रव्यस्त प्रदीपगुणभूतस्येव ज्ञानस्याप्यात्मगुणभूतस्य द्रव्यत्वमविरुद्धम्'**[2] इति। बुद्धेर्द्रव्यत्वे किं प्रमाणमिति चेत्—अनुमानमेव। तथा हि तत्त्वमुक्ताकलापे—**'बुद्धिर्द्रव्यं विकारान्वयत इतरवद् बोद्धृवच्चाजडत्वात्'**[3] इति। बुद्धिः द्रव्यं विकारवत्त्वात्, इतरद्रव्यवत्, बुद्धिः द्रव्यं स्वयं प्रकाशत्वाद् आत्मवद् इत्यनुमानाभ्यां बुद्धेर्द्रव्यत्वं सिध्यति। यानि बुद्धेरितराणि द्रव्याणि, तानि सर्वाणि यत्किञ्चिद्विकारवन्ति दृश्यन्ते। तेन विकारस्य द्रव्यत्वव्याप्यत्वावगमाद् बुद्धौ च संकोचविकासादिरूपविकारसत्त्वाद् द्रव्यत्वं सिध्यति। एवं स्वयंप्रकाशत्वं यत्रास्ति, तत्र द्रव्यत्वमस्ति, यथा आत्मनि। तद्वद् बुद्धेरपि स्वयंप्रकाशत्वाद् द्रव्यत्वं सिध्यतीति।

न्यायसिद्धाञ्जने—**'बुद्धिर्द्रव्यं प्रसारणादिमत्त्वात् संप्रतिपन्नवत्, बुद्धिर्द्रव्यं ज्ञानत्वादात्मवत्'**[4] इत्यनुमानद्वयं प्रदर्शितम्। प्रसरणं नाम चलनात्मिका क्रिया। **'प्रज्ञा च तस्मात् प्रसृता पुराणी'** इत्यादिप्रमाणवचनैः बुद्धिः प्रसरणादिक्रियावती इत्यवगम्यते। क्रियावत्वं च द्रव्यत्वव्याप्तं लिङ्गमिति तेन द्रव्यत्वं सिध्यति। एवं ज्ञानत्वं द्रव्यत्वव्याप्ततया आत्मनि दृष्टं बुद्धावपि विद्यमानं बुद्धेर्द्रव्यत्वसाधनमिति भावः।

१. रत्नपेटिका, पृ० ४०५; २. तत्त्वटीका, पृ० ४५० ।
३. श्रीभाष्यम्—पृ० ५३९ (ii Part) ब्रह्मसूत्र २-२-२७;
४. तत्त्वमुक्ताकलापः, बुद्धिसरः, श्लो० ७ । ५. न्यायसिद्धाञ्जनम् पृ० ४१९ ।

वरदविष्णुमिश्रैस्तु—'ज्ञानं द्रव्यम्,[1] संयोगादृष्टान्यत्वे सति भावनाकारणत्वाद्, आत्मवत्' इत्युक्तम्। भावना नाम स्मृतिहेतुः संस्कारः। द्रव्यत्वाभाववति मनस्संयोगे अदृष्टे च भावनाकारणत्वसत्त्वाद् व्यभिचार इति तद्वारणाय संयोगादृष्टान्यत्वे सतीति। द्रव्यत्वाभाववति रूपादौ संयोगादृष्टान्यत्वसत्त्वाद् व्यभिचारवारणाय भावनाकारणत्वादिति।

**द्रव्यत्वगुणत्वयोर्विरोधाभावः —**

ननु ज्ञानस्य द्रव्यत्वे ज्ञानरूपस्यात्मनोऽपि द्रव्यत्वाद् द्वयोरपि ज्ञानयोर्मध्ये आत्मैव धर्मी, ज्ञानं धर्म एवेति नियमेन धर्मधर्मिभावः कथं घटते ? घटपटादिषु द्रव्येषु द्वयोर्द्रव्ययोर्नियतधर्मधर्मिभावस्यादर्शनात्। ज्ञानस्य गुणत्वे तु ज्ञानरूपस्यात्मनो न ज्ञानाश्रयत्वं सम्भवति, गुणे गुणानङ्गीकारात्। न च यथा प्रभाप्रभावतोर्द्वयोरपि द्रव्यत्वेऽपि प्रभावान् दीपादिरेवाश्रयः, प्रभैव आश्रयी ( धर्मः ) इति नियतधर्मधर्मिभावो दृश्यते, एवं ज्ञानात्मनोर्द्रव्यत्वेऽपि नियतधर्मधर्मिभाव उपपद्यत इति वाच्यम्, प्रभाया विशीर्णदीपावयवरूपतया दीपधर्मत्वाभावेन दृष्टान्तासिद्धेरिति चेत्, अत्राहुर्भाष्यकारपादाः—एकमेव तेजोद्रव्यं प्रभाप्रभाववद्रूपेणावतिष्ठते। यद्यपि प्रभा प्रभावद्द्रव्याश्रितत्वेन परतन्त्रतया गुणभूता, तथाऽपि प्रभा तेजोद्रव्यमेव, न तु यथा शौक्ल्यादिकं हि स्वाश्रयादन्यत्र न गच्छति, न वा रूपाश्रय इति युज्यते गुणत्वम्। प्रभा तु स्वाश्रयादन्यत्रापि व्याप्नोति, रूपवति चेति शौक्ल्यादिगुणवैलक्षण्याद् गुणत्वं नार्हति।

किञ्च तमोविरोधी उज्ज्वलत्वाख्य आकार विशेषो दीपे तत्प्रभायां च समान उभयोर्द्रव्यत्वं साधयति। यदि प्रभा द्रव्यम्, तर्हि प्रभा दीपस्य गुण इति लोकव्यवहारः कथं संगच्छत इति चेत्, नैयायिकपरिभाषितगुणत्वाभावेऽपि नियमेन पराश्रिता परशेषभूता चेति हेतुना औपचारिको गुणत्वव्यवहार इत्यभ्युपगमात्। क्रियाविशेषरूपे दाने, अग्निहोत्राद्यङ्गभूते दध्यादिद्रव्ये सन्धिविग्रहादौ च गुणपदप्रयोगो लोकवेदयोर्दृश्यते। स यथा नित्यतदाश्रितत्वतच्छेषत्वनिबन्धनो निरुह्यते, तथा प्रकृतेऽपि। ईदृशं च गुणत्वं न द्रव्यत्वविरोधीति ज्ञानस्य द्रव्यत्वं गुणत्वं चोपनीपद्यते।

यदुक्तं विशीर्णदीपावयवा एव प्रभा, न दीपधर्म इति, तदपि न, आश्रयावयवानां विशीर्णतया प्रचरतां प्रभात्वाभ्युपगमे मणिद्युमणिप्रभृतीनां क्रमेण विनाशप्रसङ्गात्। अधिकोऽत्र विस्तरः श्रुतप्रकाशिकायां द्रष्टव्यः[2]।

**गदाधरभट्टाचार्यै**रपि व्युत्पत्तिवादे[3] पराश्रितानां गुणत्वमुपपादितम्। तथा हि—पर्वतो वह्निमान् धूमादित्यादौ धूमपदोत्तरं **'विभाषा गुणेऽस्त्रियाम्'**[4] इति सूत्रेण हेतौ तृतीया कथं स्यात्, धूमस्य गुणत्वाभावेन धूमपदस्य गुणरूपहेतुवाचकत्वाभावाद्

---

१. न्यायसिद्धाञ्जने उद्धृतोऽयं ग्रन्थः, पृ० ४१९; २. श्रुतप्रकाशिका—पृ० ४७३-४७४।
३. व्युत्पत्तिवादः—पृ० २२४; ४. पा० सू०—२।३।२५।

इत्याशङ्क्य 'गुणपदं च न रूपादिचतुर्विंशतिगुणपरम्, धूमादिहेतौ तत्त्वासम्भवात्। नापि धर्ममात्रपरम्, गगनादेरपि कालिकसम्बन्धेन धर्मतया अव्यावर्तकत्वात्। समवायादिना धर्मत्वं चाभावाद्यसंग्राहकम्। नापि द्रव्याश्रितत्वम्, सत्तावान् गुणत्वादित्यादौ गुणत्वादेस्तदभावात्; किन्तु कार्यस्य ज्ञाप्यस्य वा आश्रये आश्रितत्वम्। जाड्यादेः स्वप्रयोज्यबन्धाश्रये धूमादेश्च स्वज्ञाप्यवह्न्याद्याश्रये आश्रितत्वाद् गुणत्वम्' इति भट्टाचार्यैः स्पष्टीकरणात्।

अत्रैव विषये तत्त्वमुक्ताकलापे—ज्ञानशक्तिबलैश्वर्यादीनां षाड्गुण्यरूपत्वेन शास्त्रे प्रयोगाद् गुणस्य च रूपादेरद्रव्यत्वदर्शनात् कथं द्रव्यरूपस्य ज्ञानस्यात्मगुणत्वं स्यादित्याशङ्कां मनसि निधाय समाहितम्—

**एवं नास्या गुणत्वं गलति न खलु तत्तन्त्रसंकेतसिद्धं**
**लोके धर्मस्वभावो गुण इति विदितं साऽपि सिद्धा प्रभावत्**[1]। इति।

अस्याः बुद्धेर्गुणत्वं न गलति न हीयते। वचनबलेन गुणत्वस्यापीष्टत्वात्। बुद्धिगतं गुणत्वं तु न तार्किकपरिभाषासिद्धम्, द्रव्यान्यत्वे सति कर्मान्यत्वे सति सत्तावत्त्वमित्येवंरूपम्। तत्परिभाषितं सर्वैः स्वीकरणीयमिति राजाज्ञाविरहात्।

**मीमांसका** दध्यादिद्रव्यमपि क्रियाशेषभूतं गुणपदेन व्यवहरन्ति। उपसर्जनं द्रव्यादिकमपि गुणशब्देन आचक्षते। **वैयाकरणाः 'तद्गुणसंविज्ञानो बहुव्रीहिः'** इत्यादौ। अर्थशास्त्रेषु सन्धिविग्रहादयोऽपि गुणत्वेन कीर्त्यन्ते। अतो धर्मस्वभावत्वं गुणत्वमित्येव गुणलक्षणम्। नेदं द्रव्यव्यावृत्तम्। तथा च प्रभाया द्रव्यरूपाया अपि यथा नित्यं दीपाश्रितत्वाद् दीपगुणत्वम्, एवं द्रव्यस्यापि ज्ञानस्य अहं जानामीति आत्मधर्मत्वेन नियतं प्रतीयमानत्वाद् गुणत्वं न विरुध्यत इति उक्तश्लोकतात्पर्यम्।

एवमेव न्यायसिद्धाञ्जने[2]—अस्माकं मते वैशेषिकादिवद् अद्रव्यमेव गुण इति नाङ्गीक्रियते। यथा ह्यद्रव्यमेव विशेषणमिति नियमो नास्ति, दण्डी कुण्डलीत्यादौ द्रव्यस्यापि विशेषणत्वदर्शनात्, तद्वत्। अपृथक्सिद्धिसम्बन्धावच्छिन्नाधेयताश्रयत्वं गुणस्य लक्षणम्। परं तु गुणेष्वपि कश्चिद् विशेषोऽस्ति यत् केचन द्रव्यात्मकगुणाः, केचन केवलगुणा इति। ज्ञानादयो द्रव्यात्मकगुणाः सत्त्वरजस्तमःप्रभृतयः केवलगुणा इति। तत्र केवलगुणरूपत्वात् सत्त्वादिषु गुणशब्दो मुख्यो ज्ञानादिषु गौण इति केचित्। एतेषां पक्षे ज्ञानस्य मुख्यगुणत्वानङ्गीकारेण कथमात्मगुणभूताया बुद्धेर्द्रव्यत्वमिति चोद्यं नावसरं लभते।

अन्ये तु आश्रितस्वभावत्वस्यैव गुणपदप्रवृत्तिनिमित्तत्वाद् ज्ञानादिष्वपि मुख्यमेव गुणत्वमित्याहुः। ज्ञानादिषु गौणं गुणत्वमिति पक्ष एव भाष्यस्वारस्यसिद्धः।

---

१. तत्त्वमुक्ताकलापः, बुद्धिसरः, श्लो० ७; २. न्यायसिद्धाञ्जनम्—पृ० ४१६-४१७।

**'यद्यपि प्रभा प्रभाववद्द्रव्यगुणभूता, तथापि शौक्ल्यादिवन्न गुणः'**[1] इति भाष्ये मुख्यगुणवैधर्म्यस्य प्रभायां सूचनात् प्रभाया दार्ष्टान्तिके ज्ञानेऽप्यमुख्यगुणत्वस्यैवावगमात्।

**शाङ्करभाष्योक्तिपरिशीलनम्–**

**'गुणाद्वालोकवत्'**[2] इति सूत्रे भाष्ये चैतन्यगुणव्याप्तेर्वा अणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते। यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभा अपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति, तद्वदिति प्रतिपाद्य **'तद्गुणसारत्वात्तु'**[3] इत्यादिसिद्धान्तसूत्रव्याख्यावसरे न चाणोर्जीवस्य ज्ञानगुणद्वारा व्याप्तिरुपपद्यते, गुणस्य गुणिदेशत्वनियमादिति निरूपितम्। तत्कथं समाधेयमिति चेत्, इत्थम्–यस्तावदद्रव्यरूपो गुणः, तस्यैव गुणिदेशत्वनियमो रूपादेः। यस्तु द्रव्यात्मको गुणः, तस्य गुणिविश्लेषः स्वाश्रयद्रव्यान्यस्थलवृत्तित्वमपि भवति, यथा प्रभादेः। ज्ञानस्य च द्रव्यत्वाभ्युपगमान्न दोष इति। प्रभाया द्रव्यत्वं स्वाश्रयादन्यत्र वृत्तिश्च शाङ्करभाष्येऽपि स्वीकृते।

**ज्ञानस्य गुणत्वमेव न द्रव्यत्वमित्येकदेशिमतम्–**

रामानुजीयेष्वेव केचन ज्ञानं गुण एवेत्यातिष्ठन्त इति न्यायसिद्धाञ्जनग्रन्थतो[4] ज्ञायते। तन्मतप्रक्रिया तावदित्थम्–ज्ञानस्य गुणत्वमेव युक्तम्, न तु द्रव्यत्वम्। ज्ञानस्य द्रव्यत्वे तस्य विषयेण साकं संयोगस्यैव सम्बन्धता वक्तव्येति अतीतानागतादिविषयैः साकं ज्ञानस्य संयोगो नास्तीति ज्ञानमतीतादिविषयकं न भवेत्। अतो ज्ञानं गुणः, तत्र विषयेण साकं विषयताख्यः संयोगातिरिक्तः सम्बन्धः। सोऽतीतादिष्वप्यस्तीति अतीतादिविषयकत्वं ज्ञानस्योपपद्यते। ज्ञानस्य गुणत्वादेव स्वाश्रयादन्यत्र वृत्तिर्न सम्भवतीति। इयं तु प्रक्रिया भाष्यादिविरुद्धत्वादनादरणीयेति देशिकाः प्राहुः[5]।

**ज्ञान-विषययोः सम्बन्धः—**

ज्ञानस्य द्रव्यत्वाङ्गीकारे तस्य विषयेण सह कः सम्बन्धः? यदि घटादिद्रव्येण साकं संयोगः, द्रव्याश्रितरूपादिभिः सह संयुक्ताश्रितत्वं सम्बन्धः, तर्हि अतीतानागतादीनां पदार्थानां ज्ञानसंयोगाभावात् तेषां ज्ञानविषयत्वानुपपत्तिरिति चेत्, अत्रोच्यते— यथा **न्यायमते** अतीतादिषु ज्ञानं प्रति विषयत्वम्, यथा **भाट्टमते** अतीतादौ ज्ञातताश्रयत्वरूपं प्रकाशमानत्वम्, यथा च नैयायिकमतेऽतीतादिषु अपेक्षाबुद्धया द्वित्वाद्युत्पत्तिः, यथा वा सिद्धान्ते ब्रह्माण्डान्तरवर्तिनो देशविप्रकर्षेऽपि अण्डान्तरवर्तिपुरुषीयज्ञानेन शीघ्रसंयोगः, एवं कालविप्रकर्षेऽपि अतीतादिषु ज्ञानसंयोग उपपद्यते। अपि चातीतानागतपदार्था अपि अवस्थान्तररूपेणेदानीमपि सन्तीति तैः सह ज्ञानसंयोगः सम्भवति। अवशिष्टं परस्ताद्विवेचयिष्यते।

---

१. श्रीभाष्यम्—पृ० ४७; २. ब्रह्मसूत्रशाङ्करभाष्यम्—२।३।२५, ३. तत्रैव—२।३।२९।
४. यायसिद्धाञ्जनम्–पृ० ४३६; ५. तत्रैव— पृ० ४३६।

**ज्ञानस्य निस्सरणम्**--

यथा अद्वैतिनोऽन्तःकरणमिन्द्रियद्वारा बहिर्निस्सृत्य विषयदेशं गच्छतीत्यङ्गीकुर्वन्ति, तथा रामानुजीया आत्मधर्मभूतं ज्ञानमिन्द्रियद्वारा निस्सृत्य विषयेण संयुज्यत इति स्वीकुर्वन्ति। तदुक्तम् आत्मसिद्धौ – **'अत इन्द्रियेण सह चैतन्यमपि निस्सृत्य तेन तेनार्थेन सन्निकृष्यते'**[१] इति। **श्रीभाष्येऽपि--'तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः'**[२] इति। **'प्रज्ञा च तस्मात्प्रसृता पुराणी'**[३] इति श्रुतिः,

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि**[४]॥

इति गीतावचनम्।

**इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम्।**
**तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्**[५]॥

इति मनुस्मृतिवचनं च ज्ञानस्य क्रियावत्त्वे प्रमाणम्।

**ज्ञानस्य नित्यत्वम्**--

आत्मधर्मभूतं ज्ञानं नित्यमिति विशिष्टाद्वैतिनां सिद्धान्तः। तत्र प्रमाणं तु बृहदारण्यकगतं **'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, अविनाशित्वादात्मनः'**[६] इति, **'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा'**[७] इति च वाक्यद्वयम्। तत्र प्रथमेन वाक्येन विज्ञातुर्जीवात्मनो विज्ञातिः विज्ञानं तस्या विपरिलोपो न विद्यत इति कथनाद् जीवात्मधर्मभूतं ज्ञानं नित्यमित्यवगम्यते।

न च विनाशाभाव एवोक्तवाक्येन प्रतीयते, न तूत्पत्त्यभाव इति वाच्यम्, अनादेरेव भावस्य नाशासम्भवाद् अविनाशकथनेनैवानुत्पत्तेरपि सिद्धेः। न चात्र श्रुतौ विज्ञातुर्विज्ञातेरिति समानाधिकरणे षष्ठ्यौ। ज्ञानस्वरूपस्य विज्ञातुर्विपरिलोपो न विद्यत इत्यर्थः। तथा चात्मनित्यत्वमेवेयं श्रुतिः प्रतिपादयति, न तद्धर्मभूतज्ञाननित्यत्वमिति वाच्यम्, 'न विज्ञातुर्विपरिलोपो विद्यते' इत्यनेनैवात्मस्वरूपनित्यत्वलाभाद्, विज्ञातेरिति विशेषणस्य वैयर्थ्यप्रसङ्गाद् आत्मस्वरूपनित्यत्वस्थापन उक्तश्रुतेस्तात्पर्याभावात्। अतो 'विज्ञातुर्विज्ञाते'रिति व्यधिकरणे षष्ठ्यौ।

अपि चेयं श्रुतिरात्मधर्मभूतज्ञाननित्यत्वे आत्मनोऽविनाशित्वं हेतूकरोति। तेनेदं सिध्यति यद् ज्ञानविशिष्टस्यात्मनो नित्यत्वाद् विशेषणभूतज्ञानस्यापि नित्यत्व-

---

१. आत्मसिद्धिः—पृ० ३०; २. श्रीभाष्यम्--पृ० ४७९; ३. श्वेताश्वतरोपनिषद्--४।१८।
४. भगवद्गीता--२।६७; ५. मनुस्मृतिः—२।११; ६. बृहदारण्यकोपनिषद्—६।३।३०।
७. तत्रैव—६।५।१४।

मिति। अथवा धर्मिणो नित्यत्वात् तत्स्वाभाविकधर्मस्य ज्ञानस्यापि नित्यत्वमिति। **'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्'**[1] इति सूत्रकारो ज्ञानं यावदात्मभावी धर्म इति कथयति। आत्मनो नित्यत्वे च यावदात्मभावि ज्ञानमपि नित्यमिति लभ्यते।

द्वितीयवाक्ये 'अविनाशी' इति पदेन आत्मनो नित्यत्वमुक्त्वा अनुच्छित्तिधर्मा इति पदेन न विद्यते उच्छित्तिर्विनाशो यस्य तदनुच्छित्तिर्ज्ञानम्, अनुच्छित्तिधर्मो यस्य सोऽयमनुच्छित्तिधर्मेति बहुव्रीहिगर्भबहुव्रीहिणा अविनाशिज्ञानगुणकत्वमुच्यते। तेन ज्ञानस्य नित्यत्वं सिध्यति। न च न उच्छित्तिरनुच्छित्तिः, अनुच्छित्तिर्धर्मो यस्येति विग्रहोऽत्र विवक्षितः। तेन विनाशाभाववत्त्वमेवात्मनः प्रतिपाद्यते नाविनाशिज्ञानधर्मकत्वमिति वाच्यम्, तथा सति अविनाशी इत्यनेन पौनरुक्त्यापत्तेः, धर्मशब्दवैयर्थ्यप्रसङ्गाच्च। अव्यय इतिवद् अनुच्छित्तिरित्येतावतापि स्वरूपाविनाशस्य सिद्धेः।

भगवान् शौनकोऽपि—

**यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।**
**दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा॥**
**यथोदपानकरणात् क्रियते न जलाम्बरम्।**
**सदेव नीयते व्यक्तिमसतः सम्भवः कुतः॥**
**तथा हेयगुणध्वंसादवबोधादयो गुणाः।**
**प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते**[2]**॥**

इति ज्ञाननित्यत्वं स्पष्टमाह।

**ज्ञानस्य सङ्कोचविकासौ—**

आत्मधर्मभूतज्ञानस्य स्वतः सर्वविषयकत्वं स्वभावः। सर्वविषयकत्वं सर्ववस्तुसम्बन्धार्हत्वम्। सम्बन्धश्च संयोगसंयुक्ताश्रितत्वान्यतररूप इति पूर्वमेवोक्तम्। संसारावस्थायां तु ज्ञानं कर्मणा सङ्कुचितम्। अतः सर्वविषयसम्बन्धो न भवति। मोक्षदशायां तु प्रतिबन्धकस्य कर्मणो निवृत्तेर्निरतिशयवेगशालित्वाच्च सहसैव ज्ञानं सकलविषयसंयोगि भवति। अत एव मुक्तः सर्वज्ञ इत्युच्यते। सर्वज्ञ इत्यस्य सर्वविषयसंयुक्तज्ञानवानित्यर्थः। अयं च विषयः सूत्रकारेण सूचितः। यथा हि ज्ञाधिकरणे **'स्वशब्दोन्मानाभ्यां च'**[3] इति सूत्रेण जीवात्मनोऽणुत्वं साधयामास।

चतुर्थाध्यायचतुर्थपादे अभावाधिकरणे नन्वात्मा अणुपरिमाण इत्युक्तम्, तथा सति कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव इत्याशङ्क्य **'प्रदीपवदावेशस्तथा हि दर्शयति'**[4] इति सूत्रयाम्बभूव। यथा प्रदीपस्यैकस्य एकस्मिन् देशे वर्तमानस्य देशान्तरव्याप्तिः, तथा आत्मनोऽपि एकदेशस्थितस्यैव स्वधर्मचैतन्येन सर्वशरीरावेशो नानुपपन्नः। इयान् विशेषोऽमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा

१. ब्रह्मसूत्रम्। २. विष्णुधर्मे; ३. ब्रह्मसूत्रम्—२।३।२३; ४. तत्रैव—४।४।१५।

व्याप्तिर्न सम्भवति। मुक्तस्य त्वसंकुचितज्ञानस्य यथासंकल्पमात्माभिमानानुगुणा इदमिति ग्रहणानुकूला च व्याप्तिर्नानुपपन्ना। तथा हि दर्शयति श्रुतिः—

**बालाग्रशतभागस्य शतधा कल्पितस्य च।**
**भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते[1]** ॥ इति।

उदाहृतश्रुतौ आनन्त्यमात्मनो न स्वरूपतः, अत्रैवाणुत्वकथनेन तद्विरोधात्; अपि तु धर्मभूतज्ञानद्वारकम्। तथा चानया श्रुत्या सूत्रेण च मुक्तौ ज्ञानस्य सर्वविषयसंयोगित्वरूपमानन्त्यमुक्तं भवति। ज्ञानस्य संसारावस्थायां सङ्कोचे **'आवृतं ज्ञानमेतेन[2]'** इति भगवद्गीतावचनं प्रमाणम्।

**अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते।**
**यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृपसत्तम[3]** ॥

इति विष्णुपुराणवचनमप्यत्र भाव्यम्।

ननु ज्ञानस्य सङ्कोचविकासाभ्युपगमे तस्य नित्यत्वं कथं भवेत्? **जैनमत**निराकरणाधिकरण आत्मनः सङ्कोचविकासाभ्युपगन्तॄन् जैनान् प्रति विकारतत्प्रयुक्तानित्यत्वादिदोषस्य भवद्भिरेव भाषितत्वादिति चेत्, सत्यम्, **'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'** इति ज्ञाननित्यत्वस्य श्रुतिप्रतिपन्नत्वाद् ज्ञानसङ्कोचविकासयोरपि पूर्वोक्तश्रुतिस्मृतिसिद्धत्वात् स्वरूपतो नित्यस्य ज्ञानस्यानित्यसङ्कोचविकासात्मकावस्थावत्त्वमङ्गीकुर्मः। जैनास्तु युक्त्यनुसारेण कल्पयन्तीति तन्मते आपादनं भवत्येवेत्याशयात्।

**ज्ञानस्य स्वयंप्रकाशत्वम्—**

स्वगोचरज्ञानान्तरनिरपेक्षव्यवहारयोग्यत्वं स्वयंप्रकाशत्वम्। यथा 'बुद्धिरस्ति' इत्याकारकबुद्धिः स्वात्मानमपि विषयीकरोति, बुद्धित्वेन सामान्यरूपेण सर्वासां बुद्धीनां तस्यां भानेन स्वस्या अपि बुद्धित्वाक्रान्तायास्तद्विषयत्वात्। यथा च सर्वविषयिणी ईश्वरबुद्धिः सर्वान्तर्गतं स्वस्वरूपमपि विषयीकरोति, तथा सर्वापि बुद्धिः स्वविषयिण्यपि। परं तु स्वकाले स्वविषयिण्यपि कालान्तरे स्मृतिरूपज्ञानान्तरस्य पुरुषान्तरीयानुमित्यादेश्च बुद्धिर्विषयो भवति, न त्ववेद्यत्वं बुद्धेरद्वैतिवदस्मिन्मते। तदुक्तं न्यायसिद्धाञ्जने—

**स्वधीविशेषं सर्वज्ञोऽप्यध्यक्षयति वा न वा।**
**आद्ये सिद्धा स्वतस्सिद्धिरन्यत्रासर्ववेदिता ॥**
**ज्ञानमस्तीति विज्ञानं स्वात्मानं साधयेन्न वा।**
**पूर्वत्र स्वप्रकाशत्वं सर्वासिद्धिरतोऽन्यथा[4]** ॥ इति।

तथा च विषयप्रकाशनवेलायां ज्ञातुरात्मनो ज्ञानान्तरापेक्षां विना ज्ञानं प्रकाशते। इदमेव च ज्ञानस्य स्वयंप्रकाशत्वम्। तदेव ज्ञानं ज्ञातुः कालान्तरे स्मृत्या विषयप्रकाशन-

---

१. श्वेताश्वतरोपनिषद्—५।९; २. भगवद्गीता—३।३९; ३ विष्णुपुराणम्—६।७।६१।
४. न्यायसिद्धाञ्जनम्—पृ० ०१।

वेलायामेव पुरुषान्तरस्यानुमानादिना च वेद्यं भवति। तथा च श्रीभाष्यम्— 'यत्तु अनुभूतेः स्वयंप्रकाशत्वमुक्तम्, तद् विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव, न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति'[1] इति।

न्यायसिद्धाञ्जने अन्या अपि युक्तयः स्वयंप्रकाशत्वसाधिकाः प्रादर्शिषत—

**प्रतीतेर्व्याहरणतः सन्देहपरिवर्जनात्।**
**सत्ताया सिद्धवत्काराद् ज्ञानं भातीति भाषितम्॥**
**परस्यादर्शनाद् व्याप्तादन्वयिव्यतिरेकितः।**
**अर्थापत्तेश्च युक्तेश्च वचनाच्च स्वदृङ्मतिः**[2]॥ इति।

अयमनयोः कारिकयोराशयः—

(१)—ज्ञानोत्पत्त्यनन्तरक्षण एव अहं जानामीति व्यवहारदर्शनाद् मध्ये ज्ञानान्तरविलम्बादर्शनाद् ज्ञानं स्वयंप्रकाशम्।

(२)—ज्ञानोत्पत्त्यनन्तरम् अहं जानामि न वेति सन्देहो वा अहं न जानामीति विपर्ययो वा न दृश्यते। अतो ज्ञानोत्पत्तिकाल एव ज्ञानं निश्चितमिति वक्तव्यम्। तथा च ज्ञानं स्वयंप्रकाशमिति सिध्यति।

(३)—धारावाहिकज्ञानानन्तरं **'एतावन्तं कालमिदमहं पश्यन्नेवास्मि'** इति ज्ञानधारायाः परामर्शो भवति। ज्ञानं चेद् अस्वप्रकाशमनुव्यवसायादिवेद्यं च स्यात्, तदा मध्यभवैरनुव्यवसायैः धारायाः विच्छेदः प्रसज्येत। न चान्ते एककाले सर्वेषां ज्ञानानामनुव्यवसायो भवतीति वाच्यम्, ज्ञानानां परामर्शकाले नष्टत्वाद् अनुव्यवसायासम्भवात्। अतोऽपि ज्ञानं स्वयंप्रकाशम्।

(४)—किञ्च ज्ञानं स्वजन्यपरगतधर्मात्यन्तसजातीयधर्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितम्, स्वविजातीये स्वगतधर्मात्यन्तसजातीयधर्महेतुत्वात् प्रदीपादिवत् (अत्र साध्ये हेतौ च धर्मशब्दः प्रकाशपरः) इत्यन्वय्यनुमानेन, ज्ञानं स्वयंप्रकाशम्, अजडत्वाद् ज्ञानत्वाच्चेति व्यतिरेक्यनुमानेन च ज्ञानस्य स्वयंप्रकाशत्वं सिध्यति।

(५)—ज्ञानं न परप्रकाश्यं घटादिवदर्थाप्रकाशकत्वप्रसङ्गाद् इत्यादि तर्का अपि स्वयंप्रकाशत्वसाधका इति शम्।



---

१. श्रीभाष्यम्—पृ० ४१८;   २. न्यायसिद्धाञ्जनम्— पृ० ४०५–४०५।

# सूर्यग्रहणविमर्शः

आचार्यश्रीव्रजकिशोरझाः

❀❀❀

**श्रीसूर्यं प्रणिपत्यादौ पादयुग्मं गुरोस्ततः।**
**विमर्शः क्रियते सूर्यग्रहणस्य सतां मुदे॥**

गृह्यते स्वाभिमुखमाकृष्यते ग्राहकेन ग्राह्यं यत्र तद् ग्रहणम्। तच्च द्विविधम्—सूर्यग्रहणम्, चन्द्रग्रहणञ्च। तत्र सूर्यस्य ग्रहणं सूर्यग्रहणम्, स कदा गृह्यते? कथं गृह्यते? केन गृह्यते? कुत्र गृह्यते? इति जिज्ञासायां जायमानायां यथा चन्द्रबिम्बं भूभाबिम्बान्तर्गतं सत् सूर्यकिरणसंयोगाभावान्मलिनत्वं प्राप्नोति, तथाऽत्र सूर्यग्रहणे सूर्यबिम्बं न भवति; अपि तु स्वकक्षायां क्रान्तिवृत्ते निजगत्या भ्रमणशीलस्य सूर्यबिम्बस्याधःकक्षास्थितश्चन्द्रः स्वकीयया शीघ्रगत्या गच्छन् यदा सूर्यबिम्बभूबिम्बयोर्मध्ये समागच्छति, तदा तदन्तःपातिभूप्रदेशस्य जनानां सूर्यबिम्बदर्शने चन्द्रबिम्बमाच्छदकत्वेन बाधकं भवति, तेनाधःकक्षास्थितचन्द्रबिम्बाच्छादितसूर्यबिम्बस्य दर्शनाभावात् सूर्यग्रहणं मन्यते। एतादृशी स्थितिरमान्ते सम्भवति, यतो दर्शान्त एवैकसूत्रे सूर्यचन्द्रमसौ भवतः, तेन दर्शान्त एव सूर्यग्रहणसम्भावना; किन्तु न सर्वस्मिन् दर्शान्ते सूर्यग्रहणं सम्भवति; अपि तु यत्र दर्शान्ते चन्द्रशरः सूर्यचन्द्रबिम्बव्यासमानयोगार्धादल्पः सम्भवति, तत्रैव सूर्यग्रहणसम्भावना जायते, नान्यत्र। अतः सर्वदा दर्शान्तेऽपि सूर्यग्रहणं नैव; किन्तु यदैव मानैक्यार्धादल्पश्चन्द्रशरो भवति, तदैव सूर्यग्रहणं भवति।

अत्र सूर्यबिम्बचन्द्रबिम्बयोः परितः कृताभिः क्रमस्पर्शरेखाभिर्या समसूची समुत्पद्यते, तत्र चन्द्रबिम्बापेक्षया योजनात्मकमानेन सूर्यबिम्बस्य महत्त्वाच्चन्द्रबिम्बाभिमुखं सूच्यग्रम्। तथा चन्द्रग्रहणे रविबिम्बभूबिम्बयोः क्रमस्पर्शरेखाभिरुत्पन्ना सूची भूभारूपिणी चन्द्रग्रहणकारिणी भवति, तथैवात्र सूर्यग्रहणे यथोक्ता सूची चन्द्रभारूपिणी सूर्यग्रहणकारिणी भवति। यद्यपि चन्द्रबिम्बमानात्सूर्यबिम्बमानं योजनात्मकमधिकं भवति, तथापि कलात्मकमानेन सूर्यबिम्बाच्चन्द्रबिम्बमधिकमपि भवितुमर्हति। योकनात्मकबिम्बं सदैवैकरूपकं भवति। कलात्मकलिम्बमानं तु दृग्दूरासन्नभावेनापचीयते, उपचीयते च।

तद्यथा दृष्टिस्थानाद् बिम्बकेन्द्रगतं दृष्टिसूत्रमेकोऽवयवः, बिम्बव्यासार्धं द्वितीयः, दृष्टिस्थानात् स्पर्शरेखा तृतीय इति त्रिभुजे कोणनुपातेन दृष्टिसूत्रेण यदि तत् सम्मुखकोणज्या त्रिज्या लभ्यते, तदा बिम्बव्यासार्धेन किमिति लभ्यते बिम्बव्यासार्ध-

अत्र हरभाज्यौ त्रिज्यागुणितौ तदा भाज्यस्वरूपे पृष्ठीयनतज्या, भूव्यासार्धम्, त्रिज्या हरस्वरूपे तु त्रिज्या रविकर्णौ भवेताम्। किन्त्वत्र स्वरूपे भूव्यासार्धं त्रिज्यागुणितं रविकर्णभक्तं परमलम्बनज्यायाः स्वरूपं भवति, तेन पृष्ठीयनतज्या परमलम्बनज्यया गुणिता त्रिज्या भक्ता दृग्लम्बनज्या जाता। तत्र हरभाज्ययोस्त्रिज्या परमलम्बनज्ये स्थिरे स्तः, केवलं पृष्ठीयनतज्या गुणकारिणी चला, अतो यत्र पृष्ठीयनतज्या शून्या स्यात्, तत्र दृग्लम्बनज्या शून्या भविष्यति, अर्थात् तत्र दृग्लम्बनाभावः स्यात्। शून्यसमा पृष्ठीयनतज्या च खस्वस्तिके एव भवति, तेन खस्वस्तिके लम्बनाभावः सिद्धः। अथवा खस्वस्तिके दृग्गर्भसूत्रयोरैक्यात् तयोश्चन्द्रकक्षायामन्तराभावात् पूर्वोक्तपरिभाषाया दृग्लम्बनाभावः। खस्वस्तिके ग्रहे सति नतेरप्यभावो भवति, यतस्तदानीं तत्रैव वित्रिभग्रहौ भवतः।

जिनाल्पाक्षांशदेशे ध्रुवस्थानाज्जिनांशवृत्तं स्थानद्वये क्षितिजवृत्ते सम्पातं करोति, जिनांशतुल्याक्षांशदेशे च जिनवृत्तं क्षितिजवृत्तं केवलं समस्थाने स्पृशति। तत्र पूर्वस्थितौ जिनवृत्तक्षितिजवृत्तसम्पातरूपकदम्बाभ्यान्नवत्यंशवृत्तं तत्तत्कालिकक्रान्तिवृत्तं दृग्वृत्तानुकारमेव, द्वियीयस्थितौ च समस्थानरूपकदम्बान्नवत्यंशवृत्तं पूर्वापरवृत्तानुरूपं क्रान्तिवृत्तम्, तत्रापि सूर्यस्य खमध्यगसम्भवाद् गर्भीयपृष्ठीयदृक्सूत्रयोरैक्याल्लम्बननत्योरभावः सिद्धयति। यथोक्तं भास्करेण—'**दृग्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम्**'। एतेन खमध्ये नतिलम्बनयोरभावः प्रदर्शितः।

अथ लम्बननत्योः परमत्वं कुत्रेति विचार्यते– यद्यपि तत्रोक्तानुपातस्वरूपे यत्र पृष्ठीयनतज्या त्रिज्या समा, तत्रैव दृग्लम्बनस्य परमत्वमिति सिद्धम्; तथापि क्षेत्रयुक्त्या प्रदर्श्यते—पृष्ठस्थानात्कृतं गर्भीयक्षितिजसमानान्तरधरातलं यद्यद्गोले यत्र यत्र लग्नम्, तत्तद् गोले तत्तत् पृष्ठक्षितिजम्। तत्र स्थिते ग्रहे पृष्ठीयदृक्सूत्रभूव्यासार्धयोरुत्पन्नकोणस्य समकोणत्वात्, पृष्ठसूत्रं रविकर्णः भूव्यासार्धञ्चेत्यवयवत्रयविशिष्टे त्रिभुजे कोणानुपातेन यदि रविकर्णेन तत्सम्मुखकोणज्या त्रिज्या समा पृष्ठीयनतज्या लभ्यते, तदा भूव्यासार्धेन किमिति लभ्यते परमदृग्लम्बनज्या। पृष्ठक्षितिजमेवात्र द्रष्टुरुदयास्तक्षितिजं भवति। पृष्ठस्थादूर्ध्वस्थदृष्टिवशेन भिन्नमुदयास्तक्षितिजं जायते, यतो हि पृष्ठोर्ध्वस्थानात् कृता भूबिम्बस्पर्शरेखा पृष्ठक्षितिजादधो रविगोलं स्पृशति, तेन तस्य पृष्ठक्षितिजादध एवोदयास्तक्षितिजं सिद्धम्। उदयास्तक्षितिजे पृष्ठोर्ध्वदृष्ट्याऽपि पृष्ठक्षितिजजनितलम्बनतुल्यमेव लम्बनं भवति। पृष्ठोर्ध्वदृष्टिस्थानाद् गर्भक्षितिजसमानान्तरं यद्धरातलं तच्छिन्नरविकक्षाप्रदेशो हि दृक्क्षितिजम्, तत्र सर्वाधिकं लम्बनं भवति, यतः पूर्वोक्तपरमलम्बनसम्बन्धिकोणानुपाते भूव्यासार्धो गुणक आसीत्, अत्र तु भूव्यासार्धादधिको गुणक इति। एतेन चन्द्रगोलीयलम्बनादधिकं रविगोलीयलम्बनम्, तथा ततोऽप्यधिकं भगोलीयलम्बनं भवतीति दिग्दर्शनं जातम्।

अथ भगोले पृष्ठीयसूत्रे रविचन्द्रयोः परिणतत्वात् पृष्ठीयरविचन्द्राभ्यां ग्रहणस्पर्शादिकं सिद्धयति। तत्र नत्यन्तरसंस्कृतश्चन्द्रशरो दक्षिणोत्तरान्तरम्, लम्बनान्तर-

संस्कृतं रविचन्द्रान्तरं पूर्वापरान्तरम्, केन्द्रान्तरं कर्ण इति त्रिभुजवशेन गणकैर्ग्रहण-स्पर्शादिकं विविच्यते। तत्र पूर्वकपाले चन्द्रकक्षायां गर्भीयसूत्रापेक्षया पृष्ठीयसूत्रस्य खस्वस्तिकासन्नत्वाद् निजगत्या पूर्वाभिमुखं गच्छन् चन्द्रः पूर्वं पृष्ठीयसूत्रेण संयोगं विधाय पश्चाद् गर्भसूत्रेण संयोगं करोति। तस्मात् प्रथमं पृष्ठीयदर्शान्तः, पश्चाच्च गर्भीयदर्शान्तो भवति। पश्चिमकपाले तु पूर्वाभिमुखं स्वगत्या गच्छन् चन्द्रः प्रथमं गर्भीयसूत्रेण मिलित्वा पश्चात्पृष्ठसूत्रेण मिलति, अतस्तत्र प्रथमं गर्भीयदर्शान्तः, पश्चात्पृष्ठीयदर्शान्तो भवति।

वित्रिभे तु गर्भीयपृष्ठीयग्रहयोरैक्यात् तत्र स्पष्टलम्बनाभावाद्युगपदेव गर्भीय-पृष्ठीयदर्शान्तः। अत्र पूर्वापरकपालभेदो दृक्क्षेपवृत्ताद्भवति।

अथात्र नतिसाधनं यथा—यदि गर्भीयनतज्यया दृग्ज्यया दृक्क्षेपो लभ्यते, तदा दृग्लम्बनज्यया किमिति लभ्यते नतिः? अत्र स्वरूपे दृग्लम्बनज्यायाः पूर्वानीतस्वरूपे-णोत्थापनेन भाज्ये दृक्क्षेप-भूव्यासार्ध-पृष्ठीयनतज्येति स्वरूपम्, भाजके च गर्भीयनतज्या त्रिज्ये भवतः, तत्र स्वल्पान्तराद्धरभाज्ययोर्गर्भीयपृष्ठीयनतज्ययोः समत्वान्नाशे कृते दृक्क्षेपगुणं भूव्यासार्धं त्रिज्याभक्तमिति नतिस्वरूपमवशिष्यते। अस्य स्वरूपस्य सर्वत्र स्थिरत्वान्नतेरेकदृक्क्षेपवशेनैव सर्वत्र समत्वं सिद्ध्येत्।

अत एवोक्तं भास्करेण—**'कक्षयोरन्तरं यत् स्याद्वित्रिभे सर्वतोऽपि तत्'** अर्थात् कक्षयोः पृष्ठीयगर्भीयकक्षयोर्वित्रिभे यदन्तरं भवति, तदेव सर्वतोऽपि भवति। परमिदं मतं न समीचीनम्, यतः पृष्ठस्थानाद्रविगोलीयक्रान्तिवृत्तस्य परिधिस्थितप्रतिबिन्दुगतानि सूत्राणि यत्र यत्र चन्द्रकक्षायां लग्नानि, तत्तद्बिन्दुगतं यद्वृत्तं तदाकृतिरेव पृष्ठीयकक्षा। तथा रविगोलीयक्रान्तिवृत्तधरातलच्छिन्नचन्द्रगोलप्रदेशो गर्भीयकक्षा। अनयोर्मध्ये कदम्बप्रोते यदन्तरम्, सैव नतिः, सा वित्रिभे परमा, पृष्ठक्षितिजं चाल्पा। तदुक्तं ज्योतिर्जगद्गुरुभिः प्रातःस्मरणीयैर्महामहोपाध्यायैः **श्रीसुधाकरद्विवेदिभिः—**

**वित्रिभे नतिमितिर्महत्तमाऽत्यल्पिका भवति भूमिपृष्ठजे।**
**वित्रिभस्य यदि कल्प्यते स्थिरा सा नतांशमितिरत्र धीमता॥**

अस्योपपत्तिर्विस्तरादत्र लेखविस्तरभयादुपेक्ष्यते।

अथ यत्रैव दृग्लम्बनस्य परमत्वम्, तत्रैव स्पष्टलम्बनस्यापि परमत्वं कथमि-त्युच्यते—स्पष्टलम्बन-दृग्लम्बन-नतिरित्यवयवत्रयविशिष्टचापजात्ये भुजकोटिज्या कोटिकोटिज्या घातः कर्णकोटिज्या त्रिज्याघातसमो भवतीति चापीयत्रिकोणमित्या स्पष्टलम्बनकोटिज्या नतिकोटिज्याघातः त्रिज्यादृग्लम्बनकोटिज्याघातसमस्तत्र पक्षौ नतिकोटिज्यया भक्तौ, तदा दृग्लम्बनकोटिज्या त्रिज्याघातो नतिकोटिज्या भक्तः फलं स्पष्टलम्बनकोटिज्या सिद्ध्यति।

अत्र विचार्यते यद् वित्रिभलग्नस्थाने दृग्लम्बनकोटिज्या नतिकोटिज्या समा भवति, तेनात्र स्वरूपे हरभाज्यस्थयोस्तयोस्तुल्यनाशात् स्पष्टलम्बनकोटिज्या त्रिज्या समा सिद्धा, तेन स्पष्टलम्बनकोटिज्या शून्यसमा सिद्ध्यति। अतस्तत्र स्पष्टलम्बनाभावः सिद्धः। पृष्ठक्षितिजे तूक्तस्वरूपे भाज्यस्य दृग्लम्बनकोटिज्यायाः परमाल्पत्वं हरस्य नति-

कोटिज्यायाः परमाधिकत्वम्, तेन तत्र फलस्य स्पष्टलम्बनकोटिज्यारूपस्य परमाल्पत्वम्, अतस्तत्र स्पष्टलम्बनज्या परमाधिका भवति। पृष्ठीयदर्शान्तकाले लम्बनस्याज्ञानात् पृष्ठीयदर्शान्तज्ञानं दुर्घटम्, तेन तत्र गर्भीयदर्शान्तकालिकमेव लम्बनं पृष्ठीयदर्शान्ते स्वीकृतम्, एतेन पृष्ठीयदर्शान्तकालो वास्तवो न जात इत्येतदर्थमसकृत् कर्म कर्त्तव्यं समुचितम्।

भास्करेण तु भङ्गीक्षेत्रयुक्त्या सकृत्प्रकारेण स्पष्टलम्बनसाधनं **'त्रिभोनलग्नस्य नरस्त्रिभूघ्नो दन्तैर्विभक्तः परसंज्ञकः स्यात्'** इत्यादिना कृतम्। तत्र परस्य स्थूलत्वं वर्तते, तत् स्वयमेव भास्करेण स्वीकृतम्; तथाप्यन्यप्रकारापेक्षया प्रकारोऽयं सूक्ष्मः। ततश्च पृष्ठीयदर्शान्तज्ञानं नत्यन्तरसंस्कारेण स्पष्टशरज्ञानं च कार्यम्, यथा भगोले नतिकोटिवृत्तान्तरम्, चन्द्रगोले तु शरकोटिनतिकोटिवृत्तान्तरं स्यात्, तथा संस्कारः कर्त्तव्यः। ततो मानैक्यार्धं कर्णः, स्पष्टशरः कोटिः, स्थित्यर्धकला भुज इत्यस्मिन् जात्ये कर्णकोट्योर्ज्ञानाद् भुजज्ञानं सुलभम्।

चन्द्रनतिसाधने ब्रह्मगुप्तमतं खण्डयता भास्करेणोक्तम्—

**शशिदृक्क्षेपार्थं यद्वित्रिभलग्नेषुणात्र संस्करणम्।**
**जिष्णुजमतं तदुक्तं न मन्मतं वच्मि युक्तिमिह॥**
**यत्राक्षो जिनभागास्तत्रार्केन्दू तुलादिगावुदये।**
**पातः किल गृहषट्कं सममण्डलवत्तदापवृत्तं स्यात्॥**
**अर्कोल्लम्बितचन्द्रो न जहात्यपमण्डलं ह्यविक्षिप्तः।**
**वित्रिभशरसंस्कारन्नतिरायाति सा व्यर्था॥** इति।

ततोऽग्रे पुनरुक्तं चन्द्रस्य शरेण संस्कृत्य—

**भानोर्दृक्क्षेपधनुः साध्या स्वल्पान्तरान्नतिस्तस्मात्।**
**ग्रहणे स्वल्पशरत्वात् स्वल्पान्तरता नतेर्यस्मात्॥**
**तस्मान्नेदं पूर्वैरर्कांशाद्यैः कृतं कर्म।**
**आत्मप्रतिभासो वा मयोदितः किं जगद्विरोधेन॥** इति।

ग्रहणपरिलेखे बिम्बीयपूर्वापरवृत्तात्क्रान्तिवृत्ताकारज्ञानार्थं स्पष्टवलनस्यावश्यकता भवति। तदायनाक्षवलनयोः संस्कारेण सञ्जायते। भास्करेण स्थानीयमेवानीतम्। बिम्बीयन्तु म० म० पण्डितसुधाकरद्विवेद्युक्तदिशा साधनीयम्। ततो वास्तवः परिलेखो विधेयः। अत्र स्पर्शकालमोक्षकालयोर्यदन्तरम्, तन्मध्यकाल एव मध्यग्रहणं भवति, न तु दर्शान्तकाले। सूर्यग्रहणे ग्राह्य-ग्राहकयोः कक्षाभेदादेव लम्बननतिप्रपञ्चो भवति, तथा कक्षाभेदादेव सूर्यग्रहणं सर्वदेशाभिप्रायिकं न भवति; अपि तु सर्वदैवैकदेशाभिप्रायिकं सूर्यग्रहणं भवति। चन्द्रग्रहणं तु छाद्यच्छादकयोः कक्षैकत्वात्सर्वदेशाभिप्रायिकं भवतीति।

ग्रहणद्वयेऽपि सर्वग्रासे सति ग्रहणस्य पञ्चावयवा भवन्ति। स्पर्शः, सम्मीलनम्, मध्यग्रहणम्, उन्मीलनम्, मोक्षश्च।

( १ ) तत्र सूर्यग्रहणे रविचन्द्रयोः पश्चिमपूर्वपाल्योः संयोगः **स्पर्शः**।
( २ ) उभयोः पश्चिमपाल्योर्योगः **सम्मीलनम्**।
( ३ ) एककदम्बप्रोतवृत्तोकेन्द्रिकयोगो **मध्यग्रहणम्**।
( ४ ) सूर्यचन्द्रयोः पूर्वपाल्योर्योग **उन्मीलनम्**।
( ५ ) सूर्यचन्द्रयोः पूर्वापरपाल्योर्योगो **मोक्षः**।

खण्डग्रासे तु सम्मीलनोन्मीलनाभावात् तत्र न ग्रहणस्य पञ्चावयवा भवन्ति; अपि तु तत्र त्रयोऽवयवाः स्पर्शमध्यग्रहणमोक्षाः सम्भवन्ति। वस्तुतस्तत्र मध्यग्रहणमप्युक्त-लक्षणाभावान्नैव, तेन खण्डग्रासे वास्तवौ स्पर्शमोक्षौ द्वावेवावयवौ भवतः।

यदास्माकं भूपृष्ठवासिनां सूर्यग्रहणं भवति, तदा चन्द्रपृष्ठवासिनां चन्द्रभान्तर्गतानां भूग्रहणसम्भावना भवति, तदानीं चन्द्रभान्तर्गतानां भूप्रदेशानां सूर्यकिरणसम्पर्काभावा-दन्धकारत्वादनुज्ज्वलत्वात्। यथोक्तं कमलाकरेण—

**किञ्चेन्दुबिम्बस्य रविग्रहे या छाया पृथिव्यां पतिताऽस्ति दृष्टा।**
**तत् सम्मुखेन्दुस्थितदृग्वशाच्च बुधैः प्रकल्प्यं ग्रहणं पृथिव्याः॥**
**व्यत्यासतः शीतलभानुवत् स्याच्चन्द्रप्रभैवावरणं हि तत्र॥**

एतद्विषये म० म० सुधाकरद्विवेदिभिः कृतं सोपपत्तिकं सविस्तरं प्रपञ्चं द्रष्टव्यम्। लेखविस्तरभयादत्र तन्नोपन्यस्यते।

अथ चास्माकं चन्द्रग्रहणकाले पूर्णान्ते भूभान्तर्गतानां चन्द्रबिम्बप्रदेशवासिनां भूबिम्बाच्छादितसूर्यबिम्बप्रदेशादर्शनात् तेषां भूकालिकं सूर्यग्रहणं सम्भवति। यथोक्तं कमलाकरेण—

**एवं हि चन्द्रग्रहणस्य काले भूभेन्दुसम्बन्धगदृग्वशाच्च।**
**रविग्रहोऽत्रावरणं कुबिम्बमार्यैर्विचार्यं बहुधाऽन्यदेवम्॥**

ग्रहणानां बहुविधानि फलाफलानि च संहिताग्रन्थेषु धर्मशास्त्रग्रन्थेषु च प्रतिपादि-तानि सन्तीति कथयन् लेखविस्तरभयाद् विरम्यत इति शम्।

❀

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

### नूतनानि प्रकाशनानि

१. **ऋग्वेदप्रातिशाख्यम्**—ग्रन्थरत्नमिदं विविधैः पाठान्तरैः संशोध्य उवटाचार्यकृतभाष्यसहितं प्रकाशितम्— ५६-००

२. **संस्कारसारः**—श्रीदलपतिमहाराजप्रणीतोऽयं धर्मशास्त्रीयो ग्रन्थो विभिन्नैः परिशिष्टैः सम्भूष्य प्रकाशितः— ५०-००

३. **अद्वैतदीपिका**—श्रीनृसिंहाश्रमविरचितेयमद्वैतदीपिका श्रीनारायणाश्रमविरचिताद्वैतदीपिकाविवरणाख्यटीकया सनाथीकृत्य प्रकाशिता—द्वयोर्भागयोः—१०३-००

४. **न्यायमञ्जरी**—श्रीमज्जयन्तभट्टप्रणीतेयं न्यायमञ्जरी श्रीचक्रधरविरचितया 'ग्रन्थिभङ्ग'व्याख्यया समलङ्कृत्य प्रकाशिता—त्रयाणां भागानाम्— १५२-००

५. **व्योमवती**—व्योमशिवाचार्यविरचितमिदं ग्रन्थरत्नं विविधैः पाठभेद-परिशिष्टादिभिः सह प्रकाशितम्— द्वयोर्भागयोः—७७-००

६. **तत्त्वचिन्तामणौ प्रामाण्यवादः**—तत्त्वचिन्तामणेः प्रामाण्यवादपर्यन्तोऽयं ग्रन्थः श्रीगौरीनाथशास्त्रिविरचितया '**प्रभा**'ख्यव्याख्यया युतः सन् प्रकाशितः— १५-००

७. **प्रगल्भी**—तत्त्वचिन्तामणिग्रन्थस्योपमानखण्डात्मकमिदं पुस्तकं श्रीप्रगल्भाचार्यप्रणीतया 'प्रगल्भी' व्याख्यया समलङ्कृत्य प्रकाशितम्— १५-००

८ **अभावविमर्शः**—श्रीदीपकघोषप्रणीतमिदं ग्रन्थरत्नं नानाशास्त्रनिष्कर्षभूतं चकास्ति— १६-००

९. **दीधितिकारोपज्ञविचारणामालोचनम्**—अनुसन्धानप्रबन्धोऽयं दीधितिकारसिद्धान्तानां भृशं समालोचनां विदधाति— ५०-००

१०. **नित्याषोडशिकार्णवः** ( **द्वितीयं संस्करणम्** )—तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं शिवानन्दकृतया 'ऋजुविमर्शिन्या', विद्यानन्दकृतया 'अर्थरत्नावल्या' च टीकया सनाथीकृत्य प्रकाशितम्— ७६-००

११. **परमानन्दतन्त्रम्**—तन्त्रशास्त्रीयोऽयं ग्रन्थो विविधैः पाठभेद-परिशिष्टादिभिरानुसन्धानिकफलश्रुतिभिः सम्भूष्य प्रकाशितः— ९५-००

१२. **शिवमहिम्नस्तोत्रम्**—स्तोत्रमिदं '**मधुसूदनी**', '**नारायणी**' प्रभृतिभिः संस्कृतटीकाभिः, अथ च हिन्दीपद्यानुवाद हिन्दीव्याख्यादिभिः सनाथीकृत्य प्रकाशितम्—२०-००

१३. **अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम्**—अग्निपुराणस्य काव्यालङ्कारभागपर्यन्तमिदं ग्रन्थरत्नं '**काव्यप्रभावृत्ति**'संस्कृतटीकयाऽथ च हिन्दीव्याख्यया सम्भूष्य प्रकाशितम्— ५६-००

१४. **पाणिनीयधातुपाठसमीक्षा**—( द्वितीयं संस्करणम् ) व्याकरणशास्त्रीयोऽयं ग्रन्थः स्वीयैर्गवेषणाभरिततत्त्वैः कामं बिभर्ति महनीयामभिख्याम् । प्रथमभागस्य—८५-००

१५. **वाल्मीकिरचनामृत**—वाल्मीकिरामायणस्य विविधान् प्रसङ्गान् उपजीव्यत्वेनाङ्गीकृत्य विदुषा पण्डितश्रीकुबेरनाथशुक्लेन मार्मिकं तात्त्विकञ्च विवेचनमनुष्ठितम्— ५६-००

प्राप्तिस्थानम्-विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२.